स्वभावता परमार्थनिःस्वभावता। सर्वधर्मा परिकल्पितपरतंत्रपरिनिःष्पंनात्मकाः।
इत्यतो त्रिविधस्य स्वभावस्य त्रिविधा निःस्वभावता तां न स्वप्रदर्शयंन्नाह। प्रथमो ल एतस्येत्यपरा
क्षणेनैव निःस्वभावोपरः पुनः। न स्वयंभाव एतस्येत्यपरा निःस्वभावता॥ धर्माणां पर
मार्थश्च स यतस्तथतापि सः। प्रथमः परिकल्पितः स्वभावः अयं लक्षणेनैव निः
स्वभावः तल्लक्षणस्यात्यंतिक्षितत्वात्। रूपणालक्षणं रूपं अनुभवलक्षणा वेदने
त्यादि। अतश्च स्वरूपाभावात् खपुष्पवत् लक्षणेनैव निःस्वभावः अपरस्तु पुनरि
ति परतंत्रस्वभावः न स्वयंभाव एतस्य मायावत् परप्रत्ययेनोत्पत्तेः। अतश्च यथा प्र
ख्याति तथास्योत्पत्तिर्नास्तीति अतोस्य उत्पत्तिनिःस्वभावतेत्युच्यते। धर्माणां पर १२
मार्थश्च स यतस्तथतापि सः इति। परमं हि लोकोत्तरज्ञानं निःप्रपंचत्वात् तस्यार्थः प
रमार्थः। अथवा आकाशवत् सर्वत्रैकरसार्थेन वैमल्याविकारार्थेन वा परिनि
ष्पंनः स्वभावः परमार्थ उच्यते। स यस्मात् परिनिष्पंन स्वभावः सर्वधर्माणां पर

परावृत्तिरिति। आश्रयोत्र सर्वबीजकमालयविज्ञानं। तस्य परावृत्तिर्या दौष्ठुल्यवि
पाकद्वयवासनाभावेन निवृत्तौ सत्यां कर्मण्यताधर्मकायाद्वयज्ञानभावेन परा
वृत्तिः सा पुनराश्रयपरावृत्तिः कस्य प्रहाणात्प्राप्यते। अत आह। द्विधा दौष्ठुल्यहा
नितः द्विधेति क्लेशावरणदौष्ठुल्यं ज्ञेयावरणदौष्ठुल्यं च। दौष्ठुल्यमाश्रयस्याक
र्मण्यता। तत्पुनः क्लेशज्ञेयावरणयोर्बीजं। सा पुनराश्रयपरावृत्तिः श्रावकादिगतदौ
ष्ठुल्यहानितश्च प्राप्यते। यदाह। विमुक्तिकाय इति। बोधिसत्वगतदौष्ठुल्यहानित
श्च प्राप्यते। यदाह। धर्माख्योपि महामुनेरिति। द्विधावरणभेदेन सोत्तरानुत्त
राश्रयपरावृत्तिरूपोऽत्र गाथा। ज्ञेयमारभ्य विज्ञानं द्वयावरणलक्षणं सर्वबी
जं क्लेशबीजं च बलतद्वयोरिति श्रावकबोधिसत्वयोः आश्रयस्य क्लेशबीजं तस्य
द्वयावरणबीजं। तदुपघातात्सर्वज्ञतावाप्तिर्भवतीति। स एवानास्रवो धातुरिति स
एवाश्रयपरावृत्तिरूपं अनास्रवो धातुरित्युच्यते। निर्दौष्ठुल्यत्वात्सत्वाश्रवविग

E (p. 31) TrBh

ज्ञानस्वरूपवहिश्चात्मा धर्म्माश्चावास्तवपरिकल्पित एवात्मा धर्म्माश्च न तु परमार्थतः सन्तीति विज्ञान
वद्विज्ञेयमप्युच्यते एवमप्येकान्तवादात्मापरिपयः ।। उपचारस्य च निराधारस्यासम्भवादवश्यं
विज्ञानपरिणामो वस्तुतोऽस्त्युपगन्तव्यो यत्रात्मधर्म्मोपचारः प्रवर्त्तते ।। अतश्चायमसूपमा
मयुक्तिकथा विज्ञानमपि विज्ञेयवत्संवृतित एव न परमार्थत इति ।। संवृतितो ह्यभावप्रसङ्गा
त् हि संवृतिर्निरुपादाना युज्यते ।। तस्मादयमेकान्तवादो द्विप्रकारोऽपि नियुक्तिकत्वात्त्याज्य
इत्याचार्यवचनं ।। एवं च सर्वविज्ञेयं परिकल्पितस्वभावत्वाद्वस्तुतो न विद्यते विज्ञानं पुनः तृ.द:
प्रतीत्यसमुत्पन्नत्वाद्द्रव्यतोस्तीत्युपपन्नं प्रतीत्यसमुत्पन्नत्वान्न विज्ञानस्य परिणाममतदन २

स्थापितं ।। कथं पुनर्ज्ञायते वि[illegible]नबाह्यार्थेन विज्ञानमर्थाकारमुत्पद्यत इति बाह्यार्थः स्वा
कारसविज्ञानविज्ञानजनकत्वेन विज्ञानस्यालम्बनप्रत्ययः स्याद्यतेन कारणत्वमात्रेण समनन्तरादि
प्रत्ययादि विशेषाप्रसङ्गात् ।। संचितालम्बनाश्च संचविज्ञान रूपाकारत्वात् ।। न च संचितं
मवयवसंहतिमात्रादन्य विद्यते ।। तदवयवानपाक्य संचिताकारं विज्ञानानावात् ।। तस्माद्विने
व बाह्यनार्थेन विज्ञानं संचिताकारमुत्पद्यते ।। न च परमाणव एवं संचिता [redacted] तस्यालम्बन
प्यनमात्र नाम तदाकारत्वात् ।। न ह्यसंचिता वस्थायां संचितावस्थायां परमाणूनां कश्चिदात्माति
शयः ।। तस्मादसंचितवत्संचिता अपि परमाणवो नैवालम्बनं युक्तमन्यतः ।। एकैकपरमाणू

र्शनार्थमाह॥ परिणामः स च त्रिधा यत्रात्मधर्मोपचाराणां धर्मोपचारश्च। स पुनर्हेतुत्वेन फलत्वेन च वि
ज्ञेयः॥ तत्र हेतुपरिणामो यालयविज्ञाने विपाकनिःष्यन्दवासनापरिपुष्टिः। फलपरिणामः पुनर्वि
पाकवासनावृत्तिलाभादालयविज्ञानस्य पूर्वकर्माक्षेपपरिसमाप्तौ या निकायसभागान्तरेष्वभिनिर्वृत्तिः॥
निःष्यन्दवासनावृत्तिलाभाच्च॥ या प्रवृत्तिविज्ञानानां क्लिष्टस्य च मनस आलयविज्ञानादभिनिर्वृत्तिः॥ तत्र
प्रवृत्तिविज्ञानं कुशलाकुशलमालयविज्ञाने विपाकवासनां निःष्यन्दवासनां चाधत्ते। अव्याकृतं क्लिष्टं च म
नो निःष्यन्दवासनामेव। स च त्रिविधः परिणामोऽधुनापि न ज्ञायते॥ अतस्तद्भेदप्रदर्शनार्थमाह वि
पाको मननाख्यश्च विज्ञप्तिर्विषयस्य च॥ स एव त्रिविधः परिणामो विपाकाख्यो मननाख्यो विषय

विज्ञप्त्याख्यश्च॥ तत्र कुशलाकुशलकर्मवासनापरिपाकवशाद्यथाकर्मफलाभिनिर्वृत्तिर्विपाकः॥ क्लिष्टं मना
नित्यं मननात्मकत्वान्मननाख्यं॥ रूपादिविषयप्रतिभासत्वाच्चक्षुरादिविज्ञानं षड्विधमपि विषयविज्ञ
प्तिः॥ तत्स्वरूपनिर्देशमकृत्वा न तत्स्वरूपं गम्यते इति यथायथं तत्स्वरूपं तद्धर्मांश्च प्रदर्शयन्नाह॥ तत्रालयाख्यं
विज्ञानं विपाकः सर्वबीजकमिति॥ तत्र नियायमनकत्वाकः त्रिविधपरिणामः॥ आलयाख्यमित्यालय
विज्ञानसंज्ञकं यद्विज्ञानं स विपाकपरिणामः॥ तत्र सर्वसांक्लेशिकधर्मबीजस्थानत्वादालयः॥ आलयः
स्थानमिति पर्यायौ॥ अथवालीयन्ते उपनिबध्यन्तेऽस्मिन्सर्वधर्माः कार्यभावेन॥ तद्वालीयते उपनिब
ध्यते कारणभावेन सर्वधर्मेष्वित्यालयः॥ विजानातीति विज्ञानं॥ सर्वधातुगतियोनिजातिषु कुशलाकु

शलकर्म्मविपाकत्वाद्विपाकः॥ सर्वधर्म्मवीजाश्रयत्वात्सर्ववीजकं॥ यदि प्रवृत्तिविज्ञानव्यतिरिक्तमालय
विज्ञानमस्ति तदा तस्यालम्वनमाकारो वा वक्तव्यः॥ न हि निरालम्वनं निराकारम्वा विज्ञानं युज्यते॥ नैव
तन्निरालम्वनन्निराकारञ्चेष्यते॥ किन्तर्ह्यपरिच्छिन्नालम्वनाकारं किं कारणं॥ यस्मादालयविज्ञानं
द्विधा प्रवर्त्तते॥ अध्यात्ममुपादानविज्ञप्तितो वहिर्द्धा परिच्छिन्नाकारभाजनविज्ञप्तितश्च॥ तत्राध्या
त्ममुपादानं॥ परिकल्पितस्वभावाभिनिवेशवासना साधिष्ठानमिन्द्रियरूपं नाम च॥ अस्यालम्वनमि
ति सामर्थ्यात्॥ असंविदितकोपादिस्थानविज्ञप्तिकञ्च तत्॥ असंविदितक उपादिर्यस्मिन् असंविदि गुरू
तकाव स्थानविज्ञप्तिर्यस्मिन् तदालयविज्ञानमसंविदितकोपादिस्थानविज्ञप्तिकं॥ उपादानमुपादिः ६

स पुनरात्मादिविकल्पवासना रूपादिधर्म्मविकल्पवासना च॥ तत्सद्भावादालयविज्ञानेनात्मादिविकल्पा
रूपादिविकल्पाश्च कार्य्यत्वेनोपात्ताः॥ तद्वासनात्मादिविकल्पानां रूपादिविकल्पानाञ्चोपादिरित्युच्यते॥
सा अस्मिन्निदं तदिति प्रतिसंवेदनाकारेणासंविदितेत्यतस्तदसंविदितकोपादीत्युच्यते॥ आश्रयोपा
दानञ्चोपादिः॥ आश्रय आत्मभावः साधिष्ठानमिन्द्रियरूपं नाम च॥ तस्य पुनर्य उपादानमुपगम
नमेकयोगक्षेमत्वेन तदुपादिः॥ तत्र कामरूपधात्वोर्द्वयोर्नामरूपयोरुपादानं॥ आरूप्यधातौ तु रू
पवीतरागत्वाद्रूपविपाकानभिनिर्वृत्तेर्नाम्न उपादानमेव किन्तु वासनावस्थमेव तत्र रूपं न विपाका
वस्थं॥ तस्य पुनरुपादानमिदन्तया प्रतिसंवेदयितुमशक्यत्वादसंविदितमित्युच्यते॥ स्थानविज्ञ

ष्टिर्भाजनलोकसंनिवेशविज्ञप्तिः॥ सा ह्यपरिच्छिन्नालम्बनाकारप्रवृत्तत्वादसंविदितेत्युच्यते॥ कथं विज्ञा
नमपरिच्छिन्नालम्बनाकारं भविष्यतीति॥ अन्यविज्ञानवादिनामपि निरोधसमापत्त्याद्यवस्थासु तुल्यं
मेतन्न च निरोधसमापत्त्याद्यवस्थासु विज्ञानं नास्तीति शक्यं प्रतिपत्तुं॥ युक्तिविरोधादागमविरोधाच्चे
ति॥ तच्चालयाख्यं विज्ञानमिष्टं किं विज्ञानं सवर्ण्यते॥ संप्रयुक्तमिष्टं तावत्कथं कतमैः कतिभिश्च तदु
दः॥ सदा संप्रयुक्तं॥ तथा किं तैः सर्वदा संप्रयुक्तं॥ इत्यत आह॥ सदा स्पर्शमनस्कारवित्संज्ञाचेत
नान्वितमिति॥ सदेति यावदालयविज्ञानं तावदिति॥ स्पर्शमनस्कारवेदनासंज्ञाचेतनाख्यैः पञ्चभिः स
र्वत्रगैर्धर्मैरन्वितं॥ वेदनान्वितं॥ तत्र स्पर्शस्त्रिकसंनिपाते इन्द्रियविकारपरिच्छेदः॥ वेदनासंनिश्रय

कर्मकः॥ इन्द्रियविषयविज्ञानानि त्रीणि। एष त्रिकस्तस्य कार्यकारणभावेन समवस्थानं त्रिकसंनिपातः॥ त
स्मिन्सति तत्समकालमिन्द्रियस्य सुखादिवेदना  लो यो विकारः स इन्द्रियविकारस्तेन सदृशो विषयस्य सुखादिवेदनी
याकारपरिच्छेदः स्पर्शः॥ इन्द्रियं पुनरर्थेन विषयेण सुखदुःखादिहेतुत्वं प्रतिपद्यते स तस्य वि
कारः स स्पर्शः पुनरिन्द्रियविकारसादृश्येनेन्द्रियं स्पृशतीन्द्रियेण वा स्पृश्यत इति स्पर्श उच्यते॥ अत
एव विषयविकारपरिच्छेदात्मकोऽपीन्द्रियविकारपरिच्छेद उक्तः॥ वेदनासंनिश्रयत्वमस्य कर्म
एवं ह्युक्तं सूत्रे सुखवेदनीयं स्पर्शं प्रतीत्योत्पद्यते सुखा वेदनेत्येवमादि॥ मनस्कारश्चेतस आ
भोगः॥ आभुजनमाभोगः॥ आलम्बने येन चित्तमभिमुखीक्रियते॥ स पुनरालम्बने चित्तधारणं

मसदिति। यद्यपि यस्य कारणं तस्मिं समस्त्येवाविरुद्धवत इत्यस्यानान्यत्॥ विज्ञानं च मायागन्धर्वनगरस्वप्न
तिमिरादावसत्यालम्बनं जायते॥ यदि च विज्ञानस्यालम्बनप्रतिबद्ध उत्पादः स्यात् एवं सति मायादिष्वर्थाभा
वान्न विज्ञानमुत्पद्यते॥ तस्मात्सर्वकालं न बालम्बनीयविज्ञानाद्विज्ञानमुत्पद्यते॥ न बाह्यादर्थात्तस्मिन्नस
त्यपि तद्भावात्॥ इत्थं वाद्यन्यस्यार्थप्रतिपन्नुश्चापनस्य नविरुद्धा प्रतिपत्तिः॥ न चैकस्य प्रत्ययस्य न विरुद्धान
कास्तकल्पयन्ति॥ तस्मात्॥ अध्यात्मापि तत्सूपलब्धिकल्पस्यालम्बनमसदिति प्रतिपत्तव्यं॥ अननतावत्
समाश्रयात्पतिहृत्य प्रवादात्पतिज्ञा यथा॥ आह॥ तेनेदं सर्वं विज्ञप्तिमात्रकमिति॥ तेनेति तस्मात् गुर:
यस्मात्सर्वधात्मासत्कं न विकल्पेन यद्विकल्प्यते॥ तेन तन्नास्ति॥ तस्माद्विषयाभावात्॥ सर्वं विज्ञप्तिमात्रकं ९

सर्वमिति त्रैधातुकमसंस्कृतञ्च॥ मात्रशब्दस्तदधिकविषयव्यवच्छेदार्थः॥ ककारः पादपूरणार्थः॥ य
दि सर्वं विज्ञप्तिमात्रकमेव ततो न्यः कर्तृकरणं वा इति॥ कथं मूलविज्ञानादनधिष्ठितादनेकविध
विकल्पः प्रवर्त्तत इत्याह॥ सर्वबीजं हि विज्ञानं परिणामस्तथा तथा॥ यात्यन्योन्यवशाद्येन विकल्पः स
जायते॥ तत्र सर्वधर्मोत्पादनशक्त्यनुगमात्॥ सर्वबीजं विज्ञानमित्यालयविज्ञानं॥ विज्ञानं हि सर्वबीजा
दप्यस्तीति कृत्वा सर्वबीजमित्याह॥ विज्ञानादन्यदपि केचिदिच्छन्ति प्रधानादि सर्वबीजं कल्पयन्तीति विज्ञान
मित्याह॥ अथवा॥ एकपदव्यभिचारे पि विशेषणविशेष्यभावदर्शनात्तत्कथं॥ परिणामस्तथा
प्यन्योन्यवशादिति॥ पूर्वावस्थातोन्यथाभावः परिणामः॥ तथा तथेति तस्य तस्य विकल्पस्योत्पत्ति

स्पादनसमर्थावस्थाप्राप्तातिष्ठति ॥ अन्यान्यवशादिति ॥ तथा हि चक्षुरादिविज्ञानं स्वशक्तिपरिपोषवर्त्त
मान ॥ शक्तिविशिष्टस्यालयविज्ञानपरिणामस्य निमित्तं सापि आलयविज्ञानपरिणामश्च चक्षुरादिवि
ज्ञानस्य निमित्तं भवति ॥ एवमन्यान्यवशाद्यस्मा इत्यत्र वर्त्तते ॥ तस्मादालयविज्ञानादन्येनानधिष्ठिता
दनेकप्रकारो विकल्पः संजायते ॥ तत्र च वर्त्तमानजन्मनि यथालयविज्ञानात्प्रवृत्तिविज्ञानस्योत्
पत्तिर्भवति ॥ तथा व्याख्यातमिदानीं विज्ञप्तिमात्रं ॥ अनागतजन्म वर्त्तमानजन्मनिरोधे सति यथा प्रतिसंधी
र्यथा तद्दर्शयन्नाह ॥ कर्म्मणो वासना ग्राहद्वयवासनया सह ॥ क्षीणे पूर्वविपाके ऽन्यद्विपाकं जनय त्रिः
न्ति तदिति ॥ पूर्वापूर्वानेकविधं कर्म्म ॥ तेन कर्म्मणा यदनागतालयवासितेति हेत्वर्थ आलय( १०

विज्ञानसंमर्थमाहितं ॥ सा कर्म्मवासना ॥ ग्राहद्वय ॥ ग्राह्यग्राहो ग्राहकग्राहश्च ॥ तत्र विज्ञानस्य परतो वस्तु
स्तुकानाख्यातिं ग्राहकग्राहत्तिकमनागतज्ञातीय ग्रा ग्राहकग्राहोत्पत्तिबीजं ग्राहद्वयवासना त
त्र कर्म्मवासनाहेतुकृतिर्वेदनात्मभावोत्पादबीजं हेदादेक्रवहेदवत् ॥ ग्राहद्वयवासनास्तु सर्वक
र्म्मवासनानां यथास्वमाक्षिप्तात्मभावोत्पादने प्रवृत्तानां सहकारित्वं प्रतिपद्यते ॥ तद्यथाऽर्था दया
ज्जन्यस्यलाविति ॥ एवञ्च नवनात्कर्म्मवासना ग्राहद्वयवासनानुगृहीता विपाकं जनयन्तीत्यु
क्तं भवति ॥ अतएवाह ॥ ग्राहद्वयवासनया सह ॥ इति ॥ क्षीणे पूर्वविपाके ऽन्यद्विपाकं जनयन्ति तदिति ॥
पूर्वजन्मापचितेन कर्म्मणा यच्छेहविपाकाहितं तत्र अस्मिन्क्षीणे ॥ आक्षेपकालपर्यन्तावस्थि

तायथावर्तं कर्म्मवासनाश्च षडायतनवासनासहिता उपरतविपाकादन्यविपाकं तदालयविज्ञानं जनयन्ति
॥ आलयविज्ञानं व्यतिरेकान्नान्यस्याविपाकस्याभावात्॥ क्षीणपूर्वविपाकग्रहणेनात्मवासनापरिद
र्शयति॥ अन्यद्विपाकं जनयन्तीत्यादि॥ चक्षुरादिविज्ञानव्यतिरिक्तमालयविज्ञानमस्ति॥ तदेव च सर्वबी
जकं न चक्षुरादिविज्ञानमिति कुत एतत्॥ आगमाद्युक्तितश्च॥ उक्तं हि भगवताभिधर्म्मसूत्रे॥ अनादिकालि
को धातुः॥ सर्वधर्म्मसमाश्रयः॥ तस्मिन् सति गतिः सर्वा निर्वाणाधिगमोपि वा॥ न चालयविज्ञानमन्तरे
ण संसारप्रवृत्तिर्निवृत्तिर्वा युज्यते॥ तत्र संसारप्रवृत्तिर्निकायसभागान्तरेषु प्रतिसन्धिबन्धः॥ निवृ
त्तिः सोपधिशेषनिरुपधिशेषनिर्वाणधातुः॥ तत्रालयविज्ञानादन्यत् संस्कारप्रत्ययं विज्ञानं न

११

युज्यते॥ संस्कारप्रत्ययविज्ञानाभावप्रसङ्गात्॥ संसारस्य आलयविज्ञानान्यथोपगमे प्रतिसन्धि
विज्ञानं वा संस्कारप्रत्ययं परिकल्प्यतः॥ संस्कारभाविताः॥ षड्विज्ञानकायाः॥ तत्र ये संस्काराः प्रतिस
न्धिकाविज्ञानप्रत्ययत्वेन व्यवस्थाप्यन्ते निरुद्धत्वात्॥ चिरनष्टत्वात्॥ असतश्च प्रत्ययत्वाभावात्
॥ न संस्कारप्रत्ययं प्रतिसन्धिविज्ञानं युज्यते॥ प्रतिसन्धौ च नामरूपमप्यस्तीति न केवलं विज्ञानं तत्र विज्ञा
नमेव संस्कारप्रत्ययं न नामरूपमिति॥ कात्र युक्तिः॥ तस्मात्संस्कारप्रत्ययं नामरूपमिति वक्तव्यं॥ न तु वि
ज्ञानमिति॥ कतमदन्यविज्ञानप्रत्ययं नामरूपं॥ यदि तत्कालमिति चेत्तस्य प्रातिसन्धिकनामरूपात्क्षणा
न्तरितस्य यतस्तदेव विज्ञानप्रत्ययं न पूर्वं॥ पूर्वञ्च संस्कारप्रत्ययं नास्तीति॥ अतश्च संस्कारप्र

पक्वणाः प्रवर्त्तमानाः साश्रवविज्ञानव्यवच्छित्तिः ॥ बीजकलुषहत्वा क्लेशप्रतिपक्षमार्गेणापनीयते ॥ तस्मि
न्नपनीते न पुनस्तेनाश्रयेण क्लेशानामुत्पत्तिरिति ॥ सोपधिशेषनिर्वाणधातुं प्राप्नोति ॥ पूर्वकर्मा
क्षिप्तजन्मनिरोधाच्च ॥ तदन[illegible]ना प्रतिसंधानान्निरुपधिशेषनिर्वाणधातुं ॥ नहि कर्म विद्यमानम
पि क्लेशप्रहीणस्य हेतोः[illegible]न्तरसंधानाभावात्पुनर्भवमभिनिर्वर्त्तयितुं समर्थं ॥ एवमालयविज्ञाने सति
संसारप्रवृत्तिनिवृत्तिश्च ॥ [illegible] एव सर्वचक्षुरादिविज्ञानव्यतिरिक्तमालयविज्ञानं ॥ तदेव च सर्वधर्म
बीजानुगतत्वाच्चक्षुरादिविज्ञा[illegible]मेतत्स्वरूपगतकस्य ॥ विस्तरेण विज्ञानस्य पञ्चस्कन्धकोपनिबन्धना वेदितव्यः
यदि विज्ञप्तिमात्रमेवेदं कथं त्र[illegible] सूत्रविरोधः सूत्रेषु हि त्रयः ॥ स्वभावा उक्ताः ॥ परिकल्पितः १३
[illegible]

परतन्त्रः परिनिष्पन्नश्च ॥ नास्ति विरोधः विज्ञप्तिमात्र एव सति स्वभावत्रयव्यवस्थानात् ॥ कथमित्यत आ
ह ॥ येन येन विकल्पेन यद्यद्वस्तु विकल्प्यते ॥ परिकल्पित एवासौ स्वभावो न स विद्यते ॥ आध्यात्मिकबाह्य
विकल्प्यवस्तुभेदेन विकल्पनामानन्त्यं प्रदर्शयन्नाह ॥ येन येन विकल्पेनेति ॥ यद्यद्वस्तु विकल्प्यत ॥ आ
४ ध्यात्मिकं बाह्यं वा अन्तशो यावद्बुद्धधर्मा अपि ॥ परिकल्पित एवासौ स्वभाव इत्यत्र कारणमाह न स विद्य
त इति ॥ यद्वस्तु विकल्पविषयस्तस्याभावात्स्वभावान्न विद्यते ॥ तस्मात्तद्वस्तु परिकल्पितस्वभावमेव ॥
न हेतुप्रत्ययप्रतिबद्धस्वभावं तथाहि कल्पितवस्तुनि ॥ तदभावश्च परतन्त्रस्य निर्[illegible]कविकल्पप्रवृत्ति
दृष्टं ॥ न च तदर्थं वस्तु तद्भावो वा परतन्त्रविज्ञानकस्वभावस्य हेतुः ॥ तस्मात्सर्वमिदं विकल्पमात्र

भवतः सर्वस्य परिकल्पितरूपत्वात् || उक्तं च सूत्रे || न खलु पुनः सुभूते धर्मास्तथा विद्यन्ते यथा बालपृथग्जना अभ्
िनिविष्टा इति || परिकल्पितात्तर्हि परतन्त्रस्वभावस्य को विशेष इति || अत आह || परतन्त्रस्वभावस्तु विकल्पः प्र
त्ययोद्भवः || अत्र च विकल्प इति परतन्त्रस्वरूपमाह || प्रत्ययोद्भव इत्यनेनापि परतन्त्राभिधाने प्रवृत्तिनिमि
त्तमाह || तत्र परिकल्पः कुशलाकुशलाव्याकृतभेदेन त्रैधातुकाश्चित्तचैत्ताः | यथोक्तमभूतपरिकल्पस्तु
चित्तचैत्तास्त्रिधातुका इति || परैर्हेतुप्रत्ययैः क्रियत इति परतन्त्रः उत्पद्यत इत्यर्थः || स्वतोऽन्यहेतुप्रत्
ययप्रतिबद्धात्मलाभ इति यावदुक्तं भवति || उक्तः परतन्त्रः परिनिष्पन्नः कथमित्यत आह || निष्पन्नस्त त्रिः १४
स्य पूर्वेण सदा रहितता तु या || अविकारपरिनिष्पत्त्या स परिनिष्पन्नः || तस्येति परतन्त्रस्य पूर्वेणेति

परिकल्पितेन तस्मिन् विकल्पे ग्राह्यग्राहकभावः परिकल्पितः तथा हि तस्मिन् विकल्पे ग्राह्यग्राहकत्वम
विद्यमानमेव परिकल्प्यत इति || परिकल्पितमुच्यते || तेन ग्राह्यग्राहकेण परतन्त्रस्य सदा सर्वकालम
त्यन्तरहितता या स परिनिष्पन्नस्वभावः || अत एव स नैवान्यो नानन्यः परतन्त्रतः || अत एव स
नेति परिकल्पितेन स्वभावेन परतन्त्रस्य सदा रहितता परिनिष्पन्नः || रहितता च धर्मता सा च
धर्मता धर्मान्नान्या नानन्या युक्ता || परिनिष्पन्नश्च परतन्त्रधर्मतेति परतन्त्रात्परिनिष्पन्नो नाना
न्यो नानन्य इति वाच्यः || यदि हि परिनिष्पन्नः परतन्त्रादन्यः स्यादेवं न परिकल्पितेन परतन्त्रः
शून्यः स्यात् || अथानन्य एवमपि परिनिष्पन्नो न विशुद्ध्यालम्बनः स्यात् परतन्त्रवत् संक्लेशात्मक

त्वात्॥ एवं परतन्त्रस्वभावो ऽनात्मकः स्यात्॥ परिनिष्पन्नादनन्यत्वात्परिनिष्पन्नवत्॥ अनित्यतादिवद्ध
र्मतानां नान्यानन्यत्वमिति वाक्यशेषः यथा ह्यनित्यता दुःखता नैरात्म्यता च॥ संस्कारादिभ्यो नान्या नानन्या॥ य
दि संस्कारेभ्यो ऽनित्यता अन्या॥ एवं तर्हि संस्कारा नित्याः स्युः॥ अथानन्या एवमपि संस्काराः प्रध्वंसा
भावरूपाः स्युः अनित्यतावत् एवं दुःखतादिष्वपि वाच्यं॥ यदि अयं अद्रष्टकताव यदि चैव परतन्त्रः कथ
मसौ गृह्यते अगृह्यमाणो वा कथमस्तीति विज्ञायते॥ अत आह नादृष्टे ऽस्मिन् स दृश्यते॥ नादृष्टे ऽस्मिन्न
ति परिनिष्पन्ने स्वभावे स दृश्यत इति परतन्त्रः स्वभावः॥ निर्विकल्पलोकोत्तरज्ञानदृष्टे परिनिष्प त्रि: १५
न्ने स्वभावे ऽदृष्टे विषयसामान्यलक्षणे लौकिकज्ञानगम्यत्वात्॥ परतन्त्रो ऽस्य न न

गृह्यते॥ अतः परिनिष्पन्ने ऽदृष्टे परतन्त्रो न दृश्यते॥ न पुनर्लोकोत्तरज्ञानपृष्ठलब्धेनापि ज्ञानेन
दृश्यते॥ यथा निर्विकल्पप्रवेशायां ध्यानस्यामर्कः॥ तत्पृष्ठलब्धेन ज्ञानेन मायामरीचिस्वप्नप्रति
श्रुत्कोदकचन्द्रनिर्मितसमाः सर्वधर्मा गृह्यन्त इति॥ अत्र च धर्माः परतन्त्रसंगृहीता अभिप्रेताः॥
परिनिष्पन्नस्त्वाकाशवदेकरसः ज्ञानं च यथा हि निर्विकल्पेन ज्ञानेनाकाशसमतया तान् सर्वधर्मा
न्पश्यतीति परतन्त्रधर्मता कथं तन्मात्रदर्शनात्॥ यदि त्रय एव परतन्त्रः कथं सूत्रे सर्वधर्मा निः
स्वभावा अनुत्पन्ना अनिरुद्धा इति निर्दिश्यन्ते॥ नास्ति विरोधः यस्मात् त्रिविधस्य स्वभावस्य त्रिविधा
निःस्वभावतां संधाय सर्वधर्माणां देशिता निःस्वभावता॥ त्रय एव स्वभावा न च तदर्थस्तीति ज्ञापनार्थं सं

ख्यानिर्देशः स्वेन स्वेन लक्षणेन विद्यमानवत् ख्यातीति ॥ त्रिविधानिःस्वभावताः लक्षणनिःस्वभावता उ
त्पत्तिनिःस्वभावता परमार्थनिःस्वभावता च सर्वधर्म्मा परिकल्पितपरतन्त्रपरिनिष्पन्नात्मकाः ॥ ए-
तानि त्रिविधस्य स्वभावस्य ॥ यायस्य निःस्वभावतां तस्य प्रदर्शयन्नाह ॥ प्रथमो लक्षणेनैव निःस्व
भावः परः पुनः न स्वयंभाव एतस्यापरा निःस्वभावता ॥ धर्माणां परमार्थश्च स यतस्तथतापि सः
प्रथमः परिकल्पितः स्वभावः अयं लक्षणेनैव निःस्वभावः तल्लक्षणस्यासत्त्वात् ॥ रूपणा
लक्षणं रूपं अनुभवलक्षणा वेदनेत्यादि ॥ अतश्च स्वरूपाभावात् खपुष्पवत् स्वरूपेणैव निःस्वभावः
अपरः पुनरिति परतन्त्रस्वभावः ॥ न स्वयंभाव एतस्य मायावत् परप्रत्ययेनोत्पत्तेः ॥ अतश्च यथाप्र

ख्यातितथास्यासत्त्वं नास्तीति अतोऽस्य उत्पत्तिनिःस्वभावतेत्युच्यते धर्माणां परमार्थश्च स यतस्तथतापि स इति
परमं हि लोकोत्तरं ज्ञानं ॥ निरुत्तरत्वात् तस्यार्थः परमार्थः ॥ अथवा आकाशवत् ॥ सर्वत्रैकरसार्थेन वैमल्या
विकारार्थेन च ॥ परिनिष्पन्नश्च स्वभावः परमार्थनिःस्वभावता परिनिष्पन्नस्याभावस्वभावत्वात् ॥
किं पुनः परमार्थाभिधानेनैव परिनिष्पन्नोऽभिधीयते नेत्याह ॥ किं तर्हि तथतापि सः पि यस्मादनन्तर्क
ल्पे तथताशब्देनाभिधातव्यः ॥ किं तर्हि यावन्तो धर्मधातुपर्यायाः सर्वेऽप्यभिधातव्या इति ॥
सर्वकालं तथाभावात् तथता ॥ तथा हि पृथग्जनशैक्षाशैक्षावस्थासु सर्वकालं तथैव भवति ॥ नान्यथेति
तथतेत्युच्यते ॥ किं पुनस्तथता तस्य परिनिष्पन्नस्य विज्ञप्तिमात्रता ॥ उतान्या विज्ञप्तिमात्रता ॥ अत आह ॥

त्रिंशिका श्रीः ॥ अथ त्रिंशिकाविज्ञप्तिभाष्यम् ॥ पुद्गलधर्मनैरात्म्ययोरप्रतिपन्नविप्रतिपन्नानामविपरीत पुद्गलधर्मनैरात्म्यप्रतिपादनार्थं त्रिंशिकाविज्ञप्तिप्रकरणा
१ रम्भः ॥ पुद्गलधर्मनैरात्म्यप्रतिपादनं पुनः क्लेशज्ञेयावरणप्रहाणार्थम् ॥ तथा ह्यात्मदृष्टिप्रभवा रागादयः क्लेशाः, पुद्गलनैरात्म्यावबोधश्च सत्कायदृ
ष्टेः प्रतिपक्षत्वात् तत्प्रहाणाय प्रवर्तमानः सर्वक्लेशान् प्रजहाति ॥ धर्मनैरात्म्यज्ञानादपि ज्ञेयावरणप्रतिपक्षत्वाज्ज्ञेयावरणं प्रहीयते ॥ क्लेशज्ञेयावर विज्ञप्तिभाष्यम्,
णप्रहाणमपि मोक्षसर्वज्ञत्वाधिगमार्थम् ॥ क्लेशा हि मोक्षप्राप्तेरावरणमिति, अतस्तेषु प्रहीणेषु मोक्षोऽधिगम्यते ॥ ज्ञेयावरणमपि सर्वस्मिन् ज्ञेये
ज्ञानप्रवृत्तिप्रतिबन्धभूतमक्लिष्टमज्ञानम् ॥ तस्मिन् प्रहीणे (गतेऽस्मिन्) सर्वाकारे ज्ञेयेऽसक्तमप्रतिहतञ्च ज्ञानं प्रवर्तत इत्यतः सर्वज्ञत्वमधिगम्यते ॥ अ
थवा धर्मपुद्गलाभिनिविष्टा विज्ञप्तिमात्रं यथाभूतं न जानन्तीत्यतो धर्मपुद्गलनैरात्म्यप्रदर्शनेन तेषां विज्ञप्तिमात्रेऽनुपूर्वेण प्रवेशार्थं प्रकरणारम्भः ॥
अथवा विज्ञानवद्विज्ञेयमपि द्रव्यत एवेति केचिन्मन्यन्ते ॥ विज्ञेयवद्विज्ञानमपि संवृतित एव न परमार्थत इत्यस्य द्विप्रकारस्याप्येकान्तवादस्य
प्रतिषेधार्थं प्रकरणारम्भः ॥ आत्मधर्मोपचारो हि विविधो यः प्रवर्तते ॥ ] नेक आत्मयोरिति वाक्यशेषः [ विज्ञानपरिणामेऽसौ ] आत्मधर्मोपचार इ
तिसंबध्यते ॥ आत्मा धर्माश्चोपचर्यन्त इत्यात्मधर्मोपचारः, स पुनरात्मविज्ञप्तिर्धर्मप्रज्ञप्तिश्च विविध इत्यनेकप्रकारः ॥ आत्मा जीवो जन्तुर्मनुजो मा १

णव इत्येवमादिक आत्मोपचारः स्कन्धधातव आयतनानि रूपं वेदना संज्ञा संस्कारा विज्ञानमित्येवमादिको धर्मोपचारः ॥ अयं हि द्विप्रकारोऽप्युपचारो विज्ञानपरिणाम
एव न मुख्य आत्मनि धर्मेषु चेति कुत एतत् ॥ धर्माणामात्मनश्च विज्ञानपरिणामाद्बहिरभावात् ॥ कोऽयं परिणामो नाम, अन्यथात्वम् ॥ कारणक्षणनिरो
धसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणामः ॥ तत्रात्मादिविकल्पवासनापरिपोषाद्रूपादिविकल्पवासनापरिपोषाच्चालयविज्ञानादा
त्मादिनिर्भासो विकल्पो रूपादिनिर्भासश्चोत्पद्यते ॥ तमात्मादिनिर्भासं रूपादिनिर्भासञ्च तस्माद्विकल्पाद्बहिर्भूतमिवोपादायात्माद्युपचारो रूपादिधर्मोपचा
रश्चानादिकालिकः प्रवर्तते ॥ विनापि बाह्येनात्मना धर्मैश्च तद्यथा तैमिरिकस्य केशोण्डुकाद्युपचार इति, यच्च यत्र नास्ति तत्तत्रोपचर्यते ॥ तद्यथा
वाहीके गौः, एवं विज्ञानस्वरूपे बहिरात्मधर्माभावात्परिकल्पित एवात्मा धर्माश्च न तु परमार्थतः सन्तीति विज्ञानवद्विज्ञेयमप्युच्यते, एवेत्यस्यमेका
न्तवादो नाभ्युपेयः ॥ उपचारस्य च निराधारस्यासंभवादवश्यं विज्ञानपरिणामो वस्तुतोऽस्त्युपगन्तव्यो यत्रात्मधर्मोपचारः प्रवर्तते ॥ अतश्चायमुपग
मो न युक्तिक्षमो विज्ञानमपि विज्ञेयवत्संवृतित एव न परमार्थत इति ॥ संवृतितोऽप्यभावप्रसङ्गात् न हि संवृतिर्निरुपादाना युज्यते ॥ तस्माद् यमेका
न्तवादो द्विप्रकारोऽपि निर्युक्तिकत्वात्त्याज्य इत्याचार्यवचनम् ॥ एवञ्च सर्वं विज्ञेयं परिकल्पितस्वभावाद्वस्तुतो न विद्यते ॥ विज्ञानं पुनः प्रतीत्यसमुत्प

त्रिंशिका न्नत्वाद्भूततोऽस्तीत्यभ्युपेयम् ॥ प्रतीत्यसमुत्पन्नत्वं पुनर्विज्ञानस्य परिणामशब्देन ज्ञापितम् ॥ कथमेतद्गम्यते विना बाह्येनार्थेन विज्ञानमेवार्थाकार
मुत्पद्यते ॥ इति बाह्यो ह्यर्थः स्याद्वा विज्ञानजनकत्वेन विज्ञानस्यालम्बनप्रत्यय इष्यते न कारणत्वमात्रेण समनन्तरादिप्रत्ययादिविशेषप्रसङ्गात् ॥
२ सञ्चितालम्बनाश्च पञ्चविज्ञानकायास्तदाकारत्वात् ॥ न च सञ्चितमवयवसंहतिमात्रादन्यद्विद्यते ॥ तदवयवानां चैषामसञ्चिताकारविज्ञानाभावात् ॥ तस्मा विज्ञप्तिभाष्यम्,
द्विनैव बाह्येनार्थेन विज्ञानं सञ्चिताकारमुत्पद्यते ॥ न च परमाणव एव सञ्चितास्तस्यालम्बनं परमाणूनामतदाकारत्वात् ॥ न ह्यसञ्चितावस्थातः स
ञ्चितावस्थायां परमाणूनां कश्चिदात्मातिशयः ॥ तस्मादसञ्चितवत्सञ्चिता अपि परमाणवो नैवालम्बनम् ॥ अन्यस्तु मन्यते, एकैकपरमाणुरनति
रपेक्षोऽतीन्द्रियो वस्तु परस्परापेक्षा इन्द्रियग्राह्याः ॥ तेषामपि सापेक्षानिरपेक्षावस्थयोरात्मातिशयाभावादेकान्तेनेन्द्रियग्राह्यत्वमती
न्द्रियत्वं वा ॥ यदि च परमाणव एव परस्परापेक्षा विज्ञानस्य विषयीभवन्ति ॥ एवं सति योऽयं घटकुड्याद्याकारभेदो विज्ञाने स न स्यात् ॥ परमाणू
नामतदाकारत्वात् ॥ न चान्यनिर्भासस्य विज्ञानस्यान्याकारो विषयो युज्यतेऽतिप्रसङ्गात् ॥ न च परमाणवः स्तम्भादिवत्परमार्थतः सन्ति ॥ अवा
ग्मध्यपरभावसद्भावात् ॥ तदनभ्युपगमे वा पूर्वदक्षिणापरोत्तरादिदिग्भेदो यः स परमाणोर्न स्यात् ॥ ततश्च विज्ञानवत्परमाणोरप्यमूर्त २

त्वमदेशस्य च प्रसज्यते ॥ एवं बाह्यार्थाभावाद्विज्ञानमेवार्थाकारमुत्पद्यते ॥ स्वप्नविज्ञानवदित्यभ्युपेयम् ॥ वेदनादयोऽपि अतीतानागतास्तदाकारवि
ज्ञानजनका निरुद्धाजातत्वात् ॥ न च वर्तमाना वर्तमानजनका उत्पद्यमानावस्थायामसत्त्वात् ॥ उत्पन्नावस्थायां विज्ञानस्यापि तदाकारेणोत्प
न्नत्वात् किञ्चित्कर्तव्यमस्तीति मनोविज्ञानमप्यनालम्बनमेवोत्पद्यते ॥ अन्यस्त्वाह ॥ असत्यात्मनि मुख्ये धर्मेषु चोपचारो न युज्यते ॥ उप
चारो हि त्रिषु भवति नान्यतमाभावे मुख्यपदार्थे तत्सदृशेऽन्यस्मिन्विषये तयोश्च सादृश्ये तद्यथा ॥ मुख्येऽग्नौ तत्सदृशे च माणवके तयोश्च सा
धारणे धर्मे कपिलत्वे तीक्ष्णत्वे वाऽसत्यग्निर्माणवक इत्युपचारः क्रियते ॥ अत्र ह्यग्निर्माणवक इति जातिर्द्रव्यं चोपचर्यते ॥ उभयथाप्युपचा
राभावः ॥ तत्र तावन्न जातेः साधारणं कपिलत्वं तीक्ष्णत्वं वा ॥ न च साधारणधर्माभावे माणवके जात्युपचारो युज्यतेऽतिप्रसङ्गात् ॥ अत
द्धर्मत्वेऽपि जातेस्तीक्ष्णत्वकपिलत्वयोर्जात्यविनाभावित्वान्माणवके जात्युपचारो भविष्यति ॥ जात्यभावेऽपि तीक्ष्णत्वकपिलत्वयो
र्माणवके दर्शनादविनाभावित्वमयुक्तम् ॥ अविनाभावित्वे चोपचाराभावो जातिवन्माणवकेऽपि जातिसद्भावात् ॥ तस्मान्न माणव
के जात्युपचारः संभवति ॥ नापि द्रव्योपचारः सामान्यधर्माभावात् ॥ न हि योऽग्नेस्तीक्ष्णो गुणः कपिलो वा स एव माणवके, किं तर्हि त

त्रिंशिका
४

उपनिबध्यते कारणभावेन सर्वधर्मैरित्यालयः॥ विजानातीति विज्ञानं सर्वधातुगतियोनिजातिषु कुशलाकुशलकर्मविपाकत्वाद्विपाकः॥ सर्वधर्मबीजाश्रयत्वात्सर्वबीजकम्॥ यद्यपि प्रवृत्तिविज्ञानव्यतिरिक्तम् आलयविज्ञानमस्ति ततोऽस्यालम्बनमाकारो वा वक्तव्यः, नहि निरालम्बनं निराकारं वा विज्ञानं युज्यते॥ नैव तन्निरालम्बनं निराकारं चेष्यते॥ किं तर्ह्यपरिच्छिन्नालम्बनाकारम्॥ किं कारणम्॥ यस्मादालयविज्ञानं द्विधा प्रवर्तते, अध्यात्ममुपादानविज्ञप्तितो बहिर्धापरिच्छिन्नाकारभाजनविज्ञप्तितश्च तत्राध्यात्ममुपादानम्॥ परिकल्पितस्वभावाभिनिवेशवासनासाधिष्ठानम्॥ इन्द्रियरूपं नाम च॥ अस्यालम्बनस्यातिसूक्ष्मत्वात्॥ असंविदितकोपादिस्थानविज्ञप्तिकं च तत॥ असंविदितक उपादिर्यस्मिन्, असंविदितकाय स्थानविज्ञप्तिर्यस्मिन्॥ तदालयविज्ञानम्॥ असंविदितकोपादिस्थानविज्ञप्तिकम्॥ उपादानमुपादिः स पुनरात्मादिविकल्पवासना रूपादिधर्मविकल्पवासना च॥ तत्सद्भावादालयविज्ञानेनात्मादिविकल्पो रूपादिविकल्पश्च कार्यत्वेनोपात्त इति तद्वासनात्मादिविकल्पानां रूपादिविकल्पानां चोपादिरित्युच्यते॥ सोऽस्मिन्निदमिति प्रतिसंवेदनाकारेणासंविदित इत्यतस्तदसंविदितकोपादीत्युच्यते॥ आश्रयोपादानं चोपादिः॥ आश्रय आत्मभावः साधिष्ठानमिन्द्रियरूपं नाम

विज्ञप्तिमात्रम्

४

यतस्तु पुनर्यदुपादानमुपगमनमेकयोगक्षेमत्वेन तदुपादि तत्र कामरूपधात्वोर्द्वयोर्नामरूपयोरुपादानम्॥ आरूप्यधातौ तु रूपवीतरागत्वाद्रूपविपाकानभिनिर्वृत्तेर्नामोपादानमेव किन्तु वासनावस्थमेव तत्र रूपं न विपाकावस्थम्॥ तत्पुनरुपादानमिदन्तया प्रतिसंवेदयितुमशक्यमित्यतोऽसंविदित इत्युच्यते॥ स्थानविज्ञप्तिर्भाजनलोकसंनिवेशविज्ञप्तिः॥ साप्यपरिच्छिन्नालम्बनाकारप्रवृत्तत्वादसंविदितेत्युच्यते॥ कथं विज्ञानमपरिच्छिन्नालम्बनाकारं भविष्यतीति, अन्यविज्ञानवादिनामपि निरोधसमापत्त्याद्यवस्थासु तुल्यमेतत् न च निरोधसमापत्त्याद्यवस्थासु विज्ञानं नैवास्तीति शक्यते प्रतिपत्तुम्॥ युक्तिविरोधात्सूत्रविरोधाच्चेति॥ तत्रालयाख्यं विज्ञानमित्युक्तं विज्ञानं चावश्यं चैतसैः संप्रयुक्तमित्यतो वक्तव्यं कतमैः कतिभिश्च तत् सदासंप्रयुज्यते तथा किं तैः सर्वदा संप्रयुज्यते॥ उत नेत्यत आह॥ सदा स्पर्शमनस्कारवित्संज्ञाचेतनान्वितम्॥ इति॥ सदेति यावदालयविज्ञानं तावदेभिः स्पर्शमनस्कारवेदनासंज्ञाचेतनाख्यैः पञ्चभिः सर्वत्रगैर्धर्मैरन्वितम्॥ वेदनान्वित॥ तत्र स्पर्शस्त्रिकसंनिपाते, इन्द्रियविकारपरिच्छेदः॥ वेदनासंनिश्रयकर्मकः॥ इन्द्रियविषयविज्ञानानि त्रीण्येव त्रिकं तस्य कार्यकारणभावेन समवस्थानं त्रिकसंनिपातः॥ तस्मिन्सति तत्समकालमेवेन्द्रियस्य

त्रिंशिका

५

सुखदुःखादिवेदनानुकूलो यो विकारस्तेन सदृशो विषयस्य सुखादिवेदनीयाकारपरिच्छेदो यः स स्पर्शः ॥ इन्द्रियं पुनर्येन विशेषेण सुखदुःखादिहेतुत्वं प्रतिप
द्यते स तस्य विकारः स्पर्शः पुनरिन्द्रियविकारसादृश्येनेन्द्रियस्य प्रीतिप्रद्वेषेण वा स्पर्शयत इति स्पर्श उच्यते ॥ अत एव विषयविकारपरिच्छे विज्ञप्तिभाष्यम्
दात्मको ऽपीन्द्रियविकारपरिच्छेद उक्तः ॥ वेदनासंनिश्रयत्वमस्य कर्म ॥ एवं ह्युक्तं सूत्रे सुखवेदनीयं स्पर्शं प्रतीत्योत्पद्यते सुखं वेदितमि
ति विस्तरः ॥ मनस्कारश्चेतस आभोगः, आभुजनमाभोगः, आलम्बने येन चित्तमभिमुखीक्रियते न पुनरालम्बने चित्तधारणक
र्मा, चित्तधारणं पुनस्तत्रैवालम्बने पुनः पुनश्चित्तस्यावर्जनम् ॥ एतच्च कर्म चित्तसन्ततेरालम्बननियमेनाविशिष्टं मनस्कारस्याधि
कृत्योक्तम् न तु प्रतिचित्तलक्षणम् ॥ तस्य हि प्रतिक्षणमेव व्यापारेण क्षणान्तरे ॥ वेदना अनुभवस्वभावा सा पुनर्विष
यस्याह्लादकपरितापकतदुभयाकारविविक्तस्वरूपसाक्षात्करणभेदात्त्रिधा भवति ॥ सुखा दुःखा अदुःखासुखा च ॥ एवं तु
अन्ये मन्यन्ते ॥ शुभाशुभानां कर्मणां फलविपाकं प्रत्यनुभवन्त्यनेनेत्यनुभवस्तत्र शुभानां कर्मणां सुखो ऽनुभवः फलविपाकोऽ
शुभानां दुःखः, उभयेषामदुःखासुखः । अत्र चालयविज्ञानमेव शुभाशुभकर्मविपाकः ॥ प्रवृत्तौ वोपेक्षा परमार्थतः शु ५

भाशुभानां कर्मणां फलविपाकः ॥ सुखदुःखयोस्तु कुशलाकुशलकर्मविपाकजत्वादिह उपचारः ॥ तत्र सुखो ऽनुभवो यस्मिन्नुत्पन्ने संयोगेच्छा निरु
द्धे च पुनः संयोगेच्छा जायते ॥ दुःखो ऽनुभवः ॥ यस्मिन्नुत्पन्ने वियोगेच्छा निरुद्धे च पुनरसंयोगेच्छा ॥ अदुःखासुखो यस्मिन्नुत्पन्ने निरुद्धे वो
भयं न जायते ॥ संज्ञा विषयनिमित्तोद्ग्रहणम् ॥ विषय आलम्बनम् ॥ निमित्तं तद्विशेषो नीलपीताद्यालम्बनव्यवस्थाकारणम् ॥ तस्योद्ग्रह
णं निरूपणं नीलमेतन्न पीतमिति ॥

रभिहितः सो ऽयं विकल्पः ॥ अध्यारोपिता
र्थाकारः ॥ त्रैधातुकाश्चित्तचैत्ता विकल्प उच्यते ॥ यथोक्तम् । अभूतपरिकल्पस्तु चित्तचैत्तास्त्रिधातुकाः ॥ इति ॥ तेन त्रिविधेन विकल्पेनालयवि

त्रिंशिका ६ ज्ञानकृष्णमनः॥ प्रवृत्तिविज्ञानस्वभावेन ससंप्रयोगेण यद्विकल्प्यते ॥ भाजनमात्मास्कन्धधात्वायतनरूपशब्दादिकं वस्तु तन्नास्तीत्यतः स विज्ञानपरि
णामो विकल्प उच्यते ॥ असदालम्बनत्वात् ॥ कथं पुनरेतद्विज्ञायते तदालम्बनमसदिति ॥ यद्विरुद्धाकारं न भिन्नसमग्रेणाविरुद्धेन तदुत्पद्यते ॥
नान्यतः ॥ विज्ञानञ्च मायागन्धर्वनगरस्वप्नतिमिरादावसत्यालम्बने जायते ॥ यदि च विज्ञानस्यालम्बनप्रतिबद्ध उत्पादः स्यात् ॥ एवं सति मायादि विज्ञप्तिभाष्यम्
ष्वर्थाभावात् ॥ न विज्ञानमुत्पद्यते ॥ तस्मात्पूर्वकानिरुद्धात्तज्जातीयविज्ञानाद्विज्ञानमुत्पद्यते ॥ न बाह्यादर्थात्तस्मिन्नसत्यपि भावात् ॥ इष्टा
चाभिन्नेऽप्यर्थे प्रतिपत्तॄणां परस्परविरुद्धा प्रतिपत्तिः ॥ न चैकस्य परस्परविरुद्धानेकात्मकत्वं युज्यते ॥ तस्मादध्यारोपितरूपत्वाद्विकल्पस्याल
म्बनमसदिति प्रतिपत्तव्यम् ॥ अनेन तावत्समारोपपक्षं परिहृत्यापवादान्तपरिजिहीर्षयाह ॥ तेनेदं सर्वं विज्ञप्तिमात्रकम् ॥१७॥ इति ॥
तेनेति तस्मात् ॥ यस्मात्परिणामात्मकेन विकल्पेन यद्विकल्प्यते ॥ तेन तन्नास्ति तस्माद्विषयाभावात् ॥ सर्वं विज्ञप्तिमात्रकम् ॥ सर्वमिति ॥
त्रैधातुकमसंस्कृतञ्च मात्रशब्दस्त्वधिकविषयव्यवच्छेदार्थः ॥ चकारः पादपूरणार्थः ॥ यदि सर्वं विज्ञप्तिमात्रकमेव न ततोऽन्यः क
र्ता करणं वास्ति ॥ कथं मूलविज्ञानादनधिष्ठितादसति करणे विकल्पाः प्रवर्तन्त इत्याह ॥ सर्वबीजं हि विज्ञानं परिणामस्तथा तथा ॥ ६

यात्यन्योन्यवशाद्येन विकल्पः स स जायते ॥ तत्र सर्वधर्मोत्पादनशक्त्यनुगमात् ॥ सर्वबीजं विज्ञानमित्यालयविज्ञानम् ॥ विज्ञानं ह्यसर्वबीजमप्य
स्तीति ॥ अतः सर्वबीजमित्याह ॥ विज्ञानादन्यदनिकेश्वरप्रधानादि सर्वबीजं कल्प्यत इति ॥ विज्ञानमित्याह ॥ अथवा एकपदव्यभिचा
रेऽपि विशेषणविशेष्यभावदर्शनान्नायं दोषः ॥ परिणामस्तथा तथा यात्यन्योन्यवशादिति ॥ पूर्वावस्थातोऽन्यथाभावः परिणामः ॥ तथा त
थेति तस्य तस्य विकल्पस्यानन्तरोत्पादनसमर्थावस्थां प्राप्नोतीत्यर्थः ॥ अन्योन्यवशादिति ॥ तथा हि चक्षुरादिविज्ञानं स्वशक्तिपरिपोषे
वर्तमानं शक्तिविशिष्टस्यालयविज्ञानपरिणामस्य निमित्तं सोऽपि आलयविज्ञानपरिणामश्च चक्षुरादिविज्ञानस्य निमित्तं भवति ॥ ए
वमन्योन्यवशाद्यस्मादुभयं प्रवर्तते ॥ तस्मादालयविज्ञानादन्येनानधिष्ठितादनेकप्रकारो विकल्पः स स जायते ॥ तत्र च वर्तमाने ज
न्मनि यथालयविज्ञानात्प्रवृत्तिविज्ञानस्योत्पत्तिर्भवति ॥ तथाख्यातमिदानीं विज्ञप्तिमात्रे ॥ अनागतं जन्म वर्तमानजन्मनिरोधे सति यथा
प्रतिसन्धीयते तत्प्रदर्शयन्नाह ॥ कर्मणो वासना ग्राहद्वयवासनया सह ॥ क्षीणे पूर्वविपाकेऽन्यद्विपाकं जनयन्ति तत् ॥ इति ॥ पुण्या
पुण्याने(न)ञ्ज्यचेतना कर्म तेन कर्मणा यदानागतात्मभावाभिनिर्वृत्तये आलयविज्ञाने सामर्थ्यमाहितम् ॥ सा कर्मवासना ग्राहद्व

त्रिंशिका ८ यम्॥ ग्राह्यग्राहो ग्राहकग्राहश्च तत्र विज्ञानात् पृथगेव स्वसन्तानाध्यासितं ग्राह्यमतीत्यवसायो ग्राह्यग्राहः॥ तत्र विज्ञानेन प्रतीयते विज्ञा
प्यते गृह्यते, इतियो ऽवनिश्चयः स ग्राहकग्राहः॥ पूर्वोत्पन्नग्राह्यग्राहकग्राहाक्षिप्तम् अनागततज्जातीयग्राह्यग्राहकग्राहोत्पत्तिबीजं विज्ञप्तिभाष्यम्
ग्राहद्वयवासना॥ तत्र कर्मवासनाभेदाद् गतिभेदेनात्मभावभेदः॥ बीजभेदाद् अङ्कुरभेदवत्॥ ग्राहद्वयवासनायास्तु सर्वकर्मवासनानां
समानमाक्षिप्तात्मभावोत्पादनेऽपि तासां सहकारित्वं प्रतिपद्यते॥ तद्यथा, अव्यादयो ऽङ्कुरस्योत्पत्ताविति॥ एवञ्चानेकवचनाः क
र्मवासना ग्राहद्वयवासना न गृहीता विपाकं जनयन्तीत्युक्तं भवति॥ अत एवाह॥ ग्राहद्वयवासनया सहेति॥ क्षीणे पूर्वविपाकेऽ
न्यद्विपाकं जनयन्ति तदिति॥ पूर्वजन्मोपचितेन कर्मणा य इह विपाको ऽभिनिर्वृत्तस्तस्मिन् क्षीणे, इति॥ आक्षेपकालपर्यन्ता ख्यायते॥
यथा बलं कर्मवासना ग्राहद्वयवासनासहिता ऽपभुक्ताद् विपाकाद् अन्यद्विपाकं तदेवालयविज्ञानं जनयन्ति॥ आलयविज्ञानव्य
तिरेकेणान्यस्य विपाकस्याभावात्॥ क्षीणे पूर्वविपाक इत्यनेन शाश्वतात्वं परिहरति॥ अन्यद्विपाकं जनयन्तीत्युच्छेदान्तम्॥ चक्षुरा ८
दिविज्ञानव्यतिरिक्तमालयविज्ञानमस्ति तदेव च सर्वबीजकं चक्षुरादिविज्ञानमिति॥ कुत एतत्॥ आगमाद् युक्तितश्च॥ उक्तं हि भ

गवताभिधर्मसूत्रे॥ अनादिकालिको धातुः सर्वधर्मसमाश्रयः॥ तस्मिन् सति गतिः सर्वा निर्वाणाधिगमो ऽपि वा॥ न चालयविज्ञानमन्त
रेण संसारप्रवृत्तिर्निवृत्तिर्वा युज्यते॥ तत्र संसारप्रवृत्तिर्निकायसभागान्तरेषु प्रतिसन्धिबन्धः॥ निवृत्तिः सोपधिशेषनिरुपधिशे
षश्च निर्वाणधातुः॥ तत्र नालयविज्ञानादन्यत् संस्कारप्रत्ययं विज्ञानं न युज्यते॥ संस्कारप्रत्ययविज्ञानाभावे प्रवृत्तेरप्यभावः॥ सं
सारस्यालयविज्ञानानभ्युपगमे प्रतिसन्धिविज्ञानं वा संस्कारप्रत्ययं परिकल्प्येत॥ संस्कारभाविता वा षड्विज्ञानकायाः॥
तत्र ये संस्काराः प्रतिसन्धिकाविज्ञानप्रत्ययत्वेनेष्यन्ते॥ तेषां चिरनिरुद्धत्वात्॥ निरुद्धस्य चासत्वाद् असतश्च प्रत्ययत्वाभावात् सं
स्कारप्रत्ययं प्रतिसन्धिविज्ञानं युज्यते॥ प्रतिसन्धौ च नामरूपमप्यस्ति न केवलं विज्ञानं तत्र विज्ञानमेव संस्कारप्रत्ययं न ना
मरूपमिति॥ का तत्र युक्तिः॥ तस्मात् संस्कारप्रत्ययं नामरूपमिति वक्तव्यम्॥ न तु विज्ञानमिति॥ कतमद् अन्यविज्ञानप्रत्ययं नामरू
पं यद् उत्कालमिति॥ चैतस्य प्रतिसन्धिकं नामरूपात् ऊर्ध्वमाख्यातिशयः॥ एतात् तदेव विज्ञानप्रत्ययं नयुक्तम्॥ पूर्वञ्च संस्कारप्र
त्ययं नोक्तमिति॥ अतश्च संस्कारप्रत्ययं नामरूपमेवास्तु॥ किं प्रतिविज्ञानेनान्तरेण परिकल्पितेन तस्मात् प्रतिसन्धिविज्ञा

त्रिंशिका
८

न संस्कारप्रत्ययं युज्यते॥ संस्कारपरिभाविता वा षड्विज्ञानकाया अपि न संस्कारप्रत्ययं विज्ञानं युज्यते॥ किं कारणं न हि विज्ञानं विप
ाकवासनां निःष्यन्दवासनां वा आधातुमत्यर्थं समर्थं स्वःमनिकालतविरोधात्॥ नाप्यनागते तस्य तदानुत्पन्नत्वात्॥ अनुत्पन्नस्य चा विज्ञप्तिभाष्यम्
सत्वात्॥ नाप्युत्पन्नपूर्वस्य तदानिरुद्धत्वात्॥ अपि तु निकायसभागनिरोधसमापत्त्याद्यवस्थासु पुनः संस्कारपरिभावितचित्तोत्प
त्यसंभवात्॥ विज्ञानप्रत्ययं नामरूपं न स्यात्॥ षडायतनं न स्यात्॥ एवं यावज्जातिप्रत्ययं जरामरणं न स्यात्॥ ततश्च सं
सारप्रवृत्तिर्न स्यात्॥ तस्मादविद्याप्रत्ययाः संस्काराः॥ तदधिवासितालयविज्ञानं संस्कारप्रत्ययं विज्ञानं तत्प्रत्ययं प्र
तिसन्धौ नामरूपादिक्रमेणैव नीतिरनवद्या॥ संसारनिवृत्तिरपि, आलयविज्ञानेऽसति न युज्यते॥ संसारस्य हि कर्मक्लेशा
श्च कारणं तयोश्च क्लेशाः प्रधानम्॥ तथा हि क्लेशाधिपत्यात् कर्म॥ पुनर्भवाक्षेपसमर्थं भवति॥ नान्यथा॥ तथा
आक्षिप्तपुनर्भवमपि कर्म क्लेशाधिपत्यादेव पुनर्भवबीजं भवति नान्यथा॥ एवं च क्लेशा एव संसारप्रवृत्तेः प्रधानत्वा
न्मूलम्॥ अतस्तेषु प्रहीणेषु संसारो विनिवर्त्तते नान्यथा॥ न चालयविज्ञानमन्तरेण तेषां प्रहाणं युज्यते॥ कथं पुन ८

---

र्युज्यते॥ संमुखीभूतो वा क्लेशः प्रहीयते॥ बीजावस्थो वा न तावत्संमुखीभूतः प्रहीयते। इति॥ अनिष्टेर्वैप्रम्॥ तत्र प्रहाणमार्गस्थो नावाबी
जावस्थोऽपि नैव प्रहीयते॥ नहि प्रतिपक्षात्तन्नीं किञ्चिदन्यदभ्युपगम्यते॥ यत्र क्लेशबीजं व्यवस्थितं तत्प्रतिपक्षेण प्रहीयेत॥ अप्र
तिपक्षचित्तमेव क्लेशबीजानुगतमिष्यते॥ नहि तत् क्लेशबीजानुगतमेव तत्प्रतिपक्षो भवितुमर्हति॥ न चाप्रहीणक्लेशबीजानां संसारनि
वृत्तिः संभवति॥ तस्मादवश्यमालयविज्ञानं तदन्यविज्ञानसहभूभिः क्लेशोपक्लेशैर्भाव्यते॥ स्वबीजपुष्टाधानत इत्यभ्युपेयम्॥ ये पु
नश्चित्तत एव संततिपरिणामविशेषात् यथाबलं वासनावृत्तिलाभे सति क्लेशोपक्लेशाः प्रवर्तन्ते॥ तेषां चालयविज्ञानव्यवस्थितं बी
जं तत्सहभुवा क्लेशप्रतिपक्षमार्गेणापनीयते॥ तस्मिंश्चापनीते न पुनस्तेनाश्रयेण क्लेशानामुत्पत्तिरिति॥ सोपधिशेषे निर्वाण
धातुः प्राप्यते॥ पूर्वकर्माक्षिप्तजन्मनिरोधेन च॥ ततोऽन्यजन्माप्रतिसन्धानान्निरुपधिशेषो निर्वाणधातुः॥ नहि कर्म विद्यमान
मपि क्लेशेषु प्रहीणेषु सहकारिकारणाभावात् पुनर्भवमभिनिर्वर्तयितुं समर्थम्॥ एवमालयविज्ञानेऽसति संसारप्रवृत्तिर्निव
त्तिश्च॥ नान्यथेत्यवश्यं चक्षुरादिविज्ञानव्यतिरिक्तमालयविज्ञानम्॥ तदेव च सर्वधर्मबीजानुगतत्वाच्च चक्षुरादिविज्ञानमित्य

त्रिंशिका ९

भ्युपगन्तव्यम्॥ विस्तरविचारस्तु पञ्चस्कन्धकोपनिबन्धाद्वेदितव्यः॥ यदि विज्ञप्तिमात्रमेवेदं कथं न सूत्रविरोधः॥ सूत्रे हि त्रयः स्वभा
वा उक्ताः परिकल्पितः परतन्त्रः परिनिष्पन्नश्च नास्ति विरोधः॥ विज्ञप्तिमात्रेऽपि स्वभावत्रयव्यवस्थानात्॥ कथमिति चेत् आ विज्ञप्तिभाष्यम्
ह॥ येन येन विकल्पेन यद्यद्वस्तु विकल्प्यते॥ परिकल्पित एवासौ स्वभावो न स विद्यते॥ आध्यात्मिकबाह्यविकल्प्यवस्तु
भेदेन विकल्पानामानन्त्यं प्रदर्शयन्नाह॥ येन येन विकल्पेनेति॥ यद्यद्वस्तु प्रकल्प्यते॥ आध्यात्मिकं बाह्यं वा अन्ततो याव
द्बुद्धधर्मा अपि परिकल्पित एवासौ स्वभाव इत्यत्र कारणमाह॥ न स विद्यते इति॥ यद्वस्तु विकल्पविषयस्तस्य तथाभा
वान्न विद्यते॥ तस्मात्तद्वस्तु परिकल्पितस्वभावमेव॥ न हेतुप्रत्ययप्रतिबद्धस्वभावम्॥ तथा ह्येकस्मिन्वस्तुनि तदभावे च परस्प
रविरुद्धानेकविकल्पप्रवृत्तिर्दृष्टा॥ न च तदेकं वस्तु तदभावो वा परस्परविरुद्धानेकस्वभावो युज्यते॥ तस्मात्सर्वमिदं विकल्प
मात्रमेव तदर्थस्य परिकल्पितरूपत्वात्॥ उक्तं च सूत्रे॥ न खलु पुनः सुभूते धर्मास्तथा विद्यन्ते यथा बालपृथग्जना अ
भिनिविष्टा इति॥ परिकल्पितानन्तरं परतन्त्रस्वभावो वक्तव्य इति॥ अत आह॥ परतन्त्रस्वभावस्तु विकल्पः प्रत्ययोद्भवः ९

अत्र विकल्प इति परतन्त्रस्वरूपमाह॥ प्रत्ययोद्भव इत्यनेनापि परतन्त्राभिधानप्रवृत्तिनिमित्तमाह॥ तत्र विकल्पः कुशलाकु
शलाव्याकृतभेदभिन्नास्त्रैधातुकाश्चित्तचैत्ताः॥ यथोक्तम्॥ अभूतपरिकल्पस्तु चित्तचैत्तास्त्रिधातुकाः॥ इति॥ परैर्हि प्रत्ययै
स्तन्त्र्यत इति परतन्त्र उत्पाद्यत इत्यर्थः॥ स्वतोऽन्यैर्हेतुप्रत्ययप्रतिबद्धात्मलाभ इति॥ यावदुक्तं भवति॥ उक्तः परतन्त्रः परिनि
ष्पन्नः कथमित्यत आह॥ निष्पन्नस्तस्य पूर्वेण सदा रहितता तु या॥ अविपर्यासपरिनिष्पत्त्या परिनिष्पन्नः॥ तस्येति परत
न्त्रस्य पूर्वेणेति परिकल्पितेन तस्मिन्विकल्पे ग्राह्यग्राहकस्वभावः परिकल्पितः॥ तथा हि तस्मिन्विकल्पे ग्राह्यग्राह
कत्वमविद्यमानमेव परिकल्प्यत इति॥ परिकल्पितमुच्यते॥ तेन ग्राह्यग्राहकेण परतन्त्रस्य सदा सर्वकालमत्य
न्तरहितता या स परिनिष्पन्नस्वभावः॥ अत एव स नैवान्यो नानन्यः परतन्त्रतः॥ अत एव स नैवेति परिकल्पितेन स्व
भावेन परतन्त्रस्य सदा रहितता परिनिष्पन्नः॥ रहितता च धर्मता धर्मी नान्या नानन्या युज्यते॥ परिनिष्पन्नश्च
परतन्त्रधर्मतेत्यतः परतन्त्रात्परिनिष्पन्नो नान्यो नानन्य इति बोद्धव्यः॥ यदि हि परिनिष्पन्नः परतन्त्रादन्यः स्यादेवं

त्रिंशिका
११

परतन्त्रस्वभावः॥ न स्वयंभाव एतस्यापावत्परप्रत्ययेनोत्पत्तेः तेनश्च यथाप्रख्याति तथास्योत्पत्तिर्नास्तीति॥ अतो ऽस्योत्पत्तिनिः
स्वभावतेत्युच्यते॥ धर्माणां परमार्थश्च स यतस्तथतापि सः॥ इति॥ परमं हि लोकोत्तरज्ञानं निरास्रवत्वात् तस्यार्थः परमार्थः॥ अ विज्ञप्तिभाष्यम्:
थवाकाशवत्सर्वत्रैकरसार्थेन वैमल्याविकारार्थेन च परिनिष्पन्नस्वभावः परमार्थ इत्युच्यते॥ स यस्मात्परिनिष्पन्नः स्वभावः सर्व
धर्माणां परतन्त्रात्मकानां परमार्थः॥ तद्धर्मतेति कृत्वा तस्मात्परिनिष्पन्न एव स्वभावः परमार्थनिःस्वभावता परिनिष्पन्न
स्याभावस्वभावत्वात्॥ किं पुनः परमार्थाभिधानेनैव परिनिष्पन्नो ऽभिधातव्यो नेत्याह॥ किं तर्हि तथतापि सः अपि शब्दा
त्केवलं तथताशब्देनैवाभिधातव्यः॥ किं तर्हि ये चान्ये धर्मधातुपर्यायाः सर्वैस्तैरप्यभिधातव्य इति॥ सर्वकालं तथाभा
वात्॥ तथता॥ तथा हि पृथग्जनशैक्षाशैक्षावस्थासु सर्वकालं तथैव भवति नान्यथेति तथतेत्युच्यते किं पुनस्तथता
तत्परिनिष्पन्न एव विज्ञप्तिमात्रता॥ ज्ञात्वा विज्ञप्तिमात्रताम् अत आह॥ सैव विज्ञप्तिमात्रता॥ अविशुद्धलक्षणाद्बोधा
द्युपक्रमम्॥ नास्तीति कतितचित्तं तदात्मात्रदर्शनात्॥ नाग्रेस्थानाद्यविशेषानुपलम्भः प्रतिक्षिप्यते॥ नोपलम्भं तदाधानं ११

स्य ज्ञानेभावतान्वयात्॥ सर्वावरणविमोक्षं विपुलं लभते यथा॥ इति॥ सैव विज्ञप्तिमात्रतेत्यनेन वचनेनाभिसमय उक्तः॥ यदि विज्ञप्तिमात्रमेवे
दम्॥ कस्माद्वयः श्रोत्रघ्राणरसस्पर्शने रूपशब्दगन्धरसस्पर्शान् गृह्णातीत्यत आह॥ यावद्विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठति॥
ग्राहद्वयस्यानुशयस्तावन्न विनिवर्तते॥ अथवा या सा कर्मवासना ग्राहद्वयवासनासहिता क्षीणे पूर्वविपाके ऽन्यद्विपाकमन
पनीतत्क्रमम्॥ तस्मात्कथं प्रहाणप्रमाणमित्यत आह॥ यावद्विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठतीति विस्तरः॥ यावद्धि तद्धर्मतायां वि
ज्ञप्तिमात्रसंज्ञके तायां विज्ञानं नावतिष्ठति॥ किं तर्हि ग्राह्यग्राहकोपलम्भे चरति ग्राहद्वयस्य॥ ग्राह्यग्राहो ग्राहकग्राहश्च तस्याग्रा
यतदाहितम्॥ अनागतग्राहद्वयोत्पत्तये बीजमालयविज्ञाने यावद्द्वयलक्षणे विज्ञप्तिमात्रे योगिनश्चित्तं न प्रतिष्ठितं भवति॥ ता
वद्ग्राह्यग्राहकानुशयो न विनिवर्तते॥ प्रहीयत इत्यर्थः॥ अत्र च बहिरुपलम्भप्रहाणे नाध्यात्मिकोपलम्भप्रहाणं दर्शितमिति॥ अ
तो ऽस्यैव भवति॥ अहंचक्षुरादिभिः रूपादीन्गृह्णामीति, इदमिदानीं वक्तव्यं किम्॥ अर्थरहितविज्ञमात्रोपलम्भश्चित्तधर्मभा
वस्थानं नेत्याह किं तर्हि॥ विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भतः॥ स्थापयन्नग्रतः किञ्चित्तन्मात्रे नावतिष्ठते॥ इति॥ अथवा

त्रिंशिका १२ यः पुनराभिमानिकः श्रुतमात्रकेण आनीयात् ॥ अहं विज्ञप्तिमात्रतायां स्थित इति ॥ तदुपदर्शनार्थमाह ॥ विज्ञप्तिमात्रमेवेदमित्य
पि ह्युपलम्भतः इत्यादि विज्ञप्तिमात्रमेवेदम् ॥ अर्थरहितं न बाह्यो ऽर्थो ऽस्तीति ॥ एवमुपलम्भतो ग्रहणतश्चित्तीकरणत इत्यर्थः ॥
अग्रतः सम्मुखं स्थापयन्निति ॥ यथाभूतं मनसानुप्रकारात् ॥ येनालम्बनमात्रं किंचिदित्याह ॥ अस्थिसंकलिकं वा विज्ञप्तिमात्रम्
नीलकं वापि पूयकं वा विपडुकं वा व्याध्मातकादिकं वा तन्मात्रे नावतिष्ठते ॥ विज्ञानोपलम्भाप्रहाणात् ॥ कदा पुनर्विज्ञप्तेर्ग्राह्य
ग्राहकग्रहणं चित्तमात्रतायां वा प्रतिष्ठितो भवतीत्यत आह ॥ यदा त्वालम्बनं विज्ञानं नैवोपलभते तदा ॥ स्थितं विज्ञानमात्रत्वे ग्रा
ह्याभावे तदग्रहात् ॥ इति ॥ यस्मिन्काले देशनालम्बनं अववादालम्बनं प्राकृतं वा रूपशब्दाद्यालम्बनं विज्ञानं बहिश्चित्ता
न्नोपलभते न पश्यति यथा रूपाति नाभिनिविशते ॥ यथाभूतार्थदर्शी न जात्यन्धवत् ॥ तस्मिन्काले विज्ञानग्राहकस्य प्रहाणं
स्वचित्तधर्मतायां च प्रतिष्ठितो भवति ॥ अत्रैव कारणमाह ॥ ग्राह्याभावे तदग्रहादिति ॥ ग्राह्ये सति ग्राहकं भवति ॥ न तु ग्रा
ह्याभाव इति ॥ ग्राह्याभावे ग्राहकाभावमपि प्रतिपद्यते ॥ न केवलं ग्राह्याभावम् ॥ एवं हि समसमालम्ब्यालम्बकं निर्विकल्पं लो १२

कोत्तरं ज्ञानमुत्पद्यते ॥ ग्राह्यग्राहकाभिनिवेशानुशयाः प्रहीयन्ते ॥ स्वचित्तधर्मतायामेव चित्तमवस्थितं भवति ॥ यदैवं विज्ञप्तिमात्रतायां चित्तमवस्थितं भवति ॥ त
दा कथं व्यपदिश्यत इत्याह ॥ अचित्तो ऽनुपलम्भो ऽसौ ज्ञानं लोकोत्तरं च तत् ॥ आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः ॥ स एवानास्रवो धा
तुरचिन्त्यः कुशलो ध्रुवः ॥ सुखो विमुक्तिकायो ऽसौ धर्माख्यो ऽयं महामुनेः ॥ इति ॥ तदेव लोकप्रसेन दर्शनमार्गमारभ्य तरविज्ञोसः [illegible] ध्या
नसंपत्तिः भाविता विज्ञप्तिमात्रप्रविष्टयोगिनः स्वचित्तग्राहकचित्ताभावात् ॥ ग्राह्यार्थानुपलम्भाच्च ॥ अचित्तो ऽनुपलम्भो ऽसौ —
अनुपचितत्वात् ॥ लोके [illegible] चाराभावात् ॥ निर्विकल्पत्वाच्च लोकादुत्तीर्णमिति ज्ञानं लोकोत्तरं च तदिति ॥ तस्य ज्ञानस्यानं
न्तराश्रयस्य परावृत्तिर्भवतीति ज्ञापनार्थमाह ॥ आश्रयस्य परावृत्तिरिति ॥ आश्रयो ऽत्र सर्वबीजकमालयविज्ञानम् ॥ तस्य प
रावृत्तिर्या दौष्ठुल्यविपाकद्वयवासना ऽभावेन निवृत्तौ सत्यां कर्मण्यताधर्मकायाद्वयज्ञानभावेन परावृत्तिः ॥ सा पुनराश्रयपरा
वृत्तिः कस्य प्रहाणात्प्राप्यते ॥ अत आह ॥ द्विधा दौष्ठुल्यहानितः ॥ द्विधेति क्लेशावरणदौष्ठुल्यं ज्ञेयावरणदौष्ठुल्यं च ॥ दौष्ठुल्यमा
श्रयस्याकर्मण्यता ॥ तत्पुनः क्लेशज्ञेयावरणबीजम् ॥ सा पुनराश्रयपरावृत्तिः श्रावकादिगतदौष्ठुल्यहानितश्च प्राप्यते ॥ यदाह ॥ विमु

त्रिंशिका
१३

त्रिकाय इति ॥ बोधिसत्वगतदोषकृहानितश्च प्राप्यते ॥ यदाह धर्माख्योऽयम्महामुनेरिति ॥ द्विधावरणभेदेन सोत्तरा निर्मलएव आश्रयपरावृत्तिरुक्ता ॥ अत्र
गाथा ॥ ज्ञेयमध्यानवि ज्ञानं द्वयावरणलक्षणम् ॥ सर्वबीजकेशबीज      बन्धस्तनोद्ययोः ॥ इति ॥ श्रावकबोधिसत्वयोराश्रयस्य क्लेशबीजम् ॥ इतरस्य      विज्ञप्तिभाष्यम्
द्वयावरणबीजम् ॥ तदुक्तातात्सर्वज्ञतावाप्तिर्भवतीति ॥ सएवानाश्रवो धातुरिति ॥ सएवा आश्रयपरावृत्तिरूपम् ॥ अनाश्रवोधातुरित्युच्यते ॥ निर्दो
ष्कुल्यतात्तस्या अपगत इत्यनास्रव आर्यधर्महेतुत्वाद्धातुर्हेत्वर्थो ह्यत्र धातुशब्दः ॥ अचिन्त्यस्तर्कागोचरत्वात् ॥ प्रत्यात्मवेद्यत्वाद् दृष्टान्ताभावाच्च
कुशलो विशुद्धालम्बनत्वात् ॥ क्षेमत्वात् अनाश्रवधर्ममयत्वाच्च ॥ ध्रुवो नित्यत्वात् ॥ अक्षयतया सुखो नित्यत्वादेव यदनित्यं तद् दुःखमयञ्च
नित्य इति ॥ अस्मात्सुखः क्लेशावरणप्रहाणात् श्रावकाणां विमुक्तिकायः सएवा आश्रयपरावृत्तिलक्षणो धर्माख्योऽप्युच्यते ॥ महामुनेर्भूमिपा
रमितादिभावनया क्लेशज्ञेयावरणप्रहाणात् ॥ आश्रयपरावृत्तिविभुत्वागमात् ॥ महामुने धर्मकाय इत्युच्यते ॥ संसारपरित्यागा
त् ॥ तदनुपसंक्लेश      त्वानां सर्वधर्मविभुत्वलाभतश्च      धर्मकाय इत्युच्यते ॥ महामुनेरिति परममौनेययोगाद् बु
द्धो भगवान्महामुनिरिति ॥ त्रिंशिकाविज्ञप्तिभाष्यं समाप्तम् ॥ कृतिराचार्यस्थिरमतेः ॥      ॥      १३

G (13b)　TrBh

(५०)

अविनाभावेन चोपचारादर्शनात्। सापि च माणवकेऽपि जातिसद्भा-
वात्। तस्मान्न माणवके जात्युपचारः संभवति, नापि द्रव्योपचारः
सामान्यधर्माभावात्। नहि योऽग्नेस्तीक्ष्णो गुणः कपिलो वा स एव
माणवके। किं तर्हि ततोऽन्यः। विशेषस्य स्वाश्रयप्रतिबद्धत्वात्। न
विनाभिधानेनाग्नेर्माणवके उपचारो युक्तः। अग्निगुणसादृश्या-
द्युक्त इति चेत्। एवमप्यग्निगुणस्यैव तीक्ष्णस्य कपिलस्य वा
माणवकगुणे तीक्ष्णे कपिले वा सादृश्यादुपचारो युक्तो न तु
माणवकेऽग्नेर्गुणसादृश्येनासंबन्धात्। तस्माद्द्रव्योपचारोऽपि
नैव युज्यते। मुख्योऽपि पदार्थो नास्ति, तत्स्वरूपस्य सर्वज्ञानाभि-
धानविषयातिक्रान्तत्वात्। प्रधाने हि गुणरूपेण ज्ञानाभिधाने
प्रवर्तते, तत्स्वरूपासंस्पर्शात्। अन्यथा च गुणवैयर्थ्यप्रसङ्गः। नहि
ज्ञानाभिधानव्यतिरिक्तोऽन्यः पदार्थस्वरूपपरिच्छित्त्युपायोऽस्ति यतः
प्रधानस्वरूपविषयज्ञानाभिधानाभावान्नैव मुख्यः पदार्थोऽस्तीत्ये-
वमवगन्तव्यम्। एवं यावद्बुद्धेः संबन्धाभावाज्ज्ञानाभिधानाभावः,
एवं चाभिधानाभिधेयाभावान्नैव मुख्यः पदार्थोऽस्ति। अपि च
सर्वस्यायं गौण एव नमुख्योऽस्ति। गौणो हि नाम यो यत्राविद्यमा-
नेन रूपेण प्रवर्तते, सर्वश्च शब्दः प्रधानेऽविद्यमाने नैव गु- (५१)
णरूपेण प्रवर्तते। तेन मुख्यो नास्त्येव। तत्र यदुक्तं असत्यात्मनि मु-
ख्ये सदृशे चोपचारो न युक्त इति, तदयुक्तं। विज्ञानपरिणामः क-
ल्पनेति न ज्ञायते। अतस्तत्प्रदर्शनार्थमाह।

परिणामः स च त्रिधा। ॥ १ ॥

प्रवर्तेते

पायोऽस्तीत्यतः,

एवं ... प्रधाने,

यत्र गु

यत्नाम रूपधाते धर्मो फलं च, स पुन हेतुभावेन फलभावेन च वि-
द्यते, तत्र हेतुपरिणामो याऽलयविज्ञाने विपाकनिष्यन्दवासनापरि-
पुष्टिः। फलपरिणामः पुनर्विपाकवासनावृत्तिलाभा दालयविज्ञानस्य
पूर्वकर्माक्षेपपरिसमाप्तौ या निकायसभागान्तरेष्वभिनिर्वृत्तिः। निः-
ष्यन्दवासनावृत्तिलाभाच्च, या प्रवृत्तिविज्ञानानां क्लिष्टस्य च
मनस आलयविज्ञानादभिनिर्वृत्तिः। तत्र प्रवृत्तिविज्ञानं कुशला-
कुशलं आलयविज्ञाने विपाकवासनां निःष्यन्दवासनाञ्चाधत्ते।
अव्याकृतं क्लिष्टञ्च मनो निःष्यन्दवासनामेव, योऽसौ त्रिविधः
परिणाम उक्तोऽसावपि न ज्ञायते, अतस्तद्भेदप्रदर्शनार्थमाह,

विपाको मननाख्यश्च विज्ञप्तिर्विषयस्य च,

इति, स एषः त्रिविधः परिणामो विपाकाख्यो मननाख्यो विषयवि-
ज्ञप्त्याख्यश्च, तत्र कुशलाकुशलकर्मवासनापरिपाकवशात् यथा-
क्षेपं फलाभिनिर्वृत्तिर्विपाकः, क्लिष्टं मनो नित्यं मननात्मक-
त्वात् मननाख्यं, रूपादिविषयप्रतिभासत्वात् चक्षुरादिविज्ञानं
षट्प्रकारमपि विषयविज्ञप्तिः। तत्स्वरूपनिर्देशानन्तरेण तत्प्रती-
यत इत्यतो यस्य यादृक्पं तद्यथाक्रमं प्रदर्शयन्नाह।

तत्रालयाख्यं विज्ञानं विपाकः सर्वबीजकम्, ॥२॥

इति, तत्रेति योऽयमनन्तरोक्तः त्रिविधः परिणामः। आलयाख्य-
मित्यालयविज्ञानसंज्ञकं यद्विज्ञानं स विपाकपरिणामः। तत्र
सर्वसांक्लेशिकधर्मबीजस्थानत्वादालयः। आलयः स्थानमि-
ति पर्यायौ। अथवाऽलीयन्त उपनिबध्यन्तेऽस्मिन् सर्व-

धर्माः कार्यभावेन, त आलीयन्ते उपनिबध्यन्ते कारणभावेन सर्वध-
र्मेषु आलयः। विजानातीति विज्ञानं, सर्वधातुगतियोनिजातिषु
कुशलाकुशलकर्मविपाकत्वाद् विपाकः। सर्वधर्मबीजाश्रयत्वात्
सर्वबीजकम्। यदि प्रवृत्तिविज्ञानव्यतिरिक्तम् आलयविज्ञान-
मस्ति, ततोऽस्यालम्बनम् आकारो वा वक्तव्यः। न हि निरालम्बनं
निराकारं वा विज्ञानं युज्यते। नैव तन्निरालम्बनं निराकारं चेष्य-
ते, किं तर्हि अपरिच्छिन्नालम्बनाकारम्। किं कारणम्, यस्मादा-
लयविज्ञानं द्विधा प्रवर्तते, अध्यात्मं उपादानविज्ञप्तितो बहि-
र्धाऽपरिच्छिन्नाकारभाजनविज्ञप्तितश्च, तत्राध्यात्मम् उपादानम्। परि-
(नामिनि, (नामश्च, कल्पितस्वभावाभिनिवेशवासना साधिष्ठानम्, इन्द्रियरूपं नाम च,
अस्यालम्बनस्यातिसूक्ष्मत्वात्

(5b) असंविदितकोपादिस्थानविज्ञप्तिकं च तत्,

असंविदितक उपादिर्यस्मिन्, असंविदितकं स्थानविज्ञप्ति-
र्यस्मिन्, तदालयविज्ञानम्, असंविदितकोपादिस्थानविज्ञप्तिक-
म्। उपादानमुपादिः स पुनरात्मादिविकल्पवासना, रूपादि-
धर्मविकल्पवासना च। तत्सद्भावाद् आलयविज्ञानेनात्मादिवि-
कल्पो रूपादिविकल्पश्च कार्यत्वेनोपात्त इति, तद्वासनात्
मादिविकल्पानां रूपादिविकल्पानाञ्चोपादिरित्युच्यते,
सोऽस्मिन्न इदं तदिति प्रतिसंवेदनाकारेणासंविदितत्व-
त्वात् असंविदितकोपादिरित्युच्यते, आश्रयो पादा
नाख्योपादिः। आश्रय आत्मभावः साधिष्ठानं, इन्द्रियरूपं

विक.    स्पर्श,

स्पृश्यत इति,

विशेषेण सुखदुःखादिहेतुत्वं प्रतिपद्यते स तस्य वि(कारः)। स्पर्शः पु-
नरिन्द्रियविकारसादृश्येनेन्द्रियं स्पृशतीतीन्द्रियेण वा स्पृश्यत इति
स्पर्श उच्यते। अत एव विषयविकारपरिच्छेदलक्षणोऽपीन्द्रियविकार-
परिच्छेद उक्तः। वेदनासंनिश्रयदानकर्मा। एवं सुखं सूत्रे सुख-
वेदनीयं स्पर्शं प्रतीत्योत्पद्यते सुखं वेदितमिति विस्तरः।
मनस्कारः चेतस आभोगः। आभुजनमाभोगः, आलम्बने येन
(66)
चित्तमभिमुखीक्रियते। स पुनरालम्बने चित्तधारणकर्मा। चित्त-
धारणं पुनस्तत्रैवालम्बने पुनःपुनश्चित्तस्यावर्जनम्। एतच्च कर्म
चित्तसंततेरालम्बनानियमेन विशिष्टं मनस्कारमधिकृत्योक्तं न तु
प्रतिक्षणम्, तस्य हि प्रतिक्षणमेव व्यापारो न क्षणान्तरे।
वेदना अनुभवस्वभावा, सा पुनर्विषयस्याह्लादकपरितापकतदुभया-
काराविविक्तस्वरूपसाक्षात्करणभेदात् त्रिधा भवति, सुखा, दुःखा,
अदुःखासुखा च, इत्येतत्त्रयं भवति। शुभाशुभानां कर्मणां फलविपा-
कं प्रत्यनुभवन्त्यनेनेत्यनुभवः। तत्र शुभानां कर्मणां सुखोऽनुभवः फल-
विपाकः। अशुभानां दुःखः। उभयेषामदुःखासुखः। अत्र चालयविज्ञान-
मेव शुभाशुभकर्मविपाकः। ---प्रवृत्तिविज्ञानेष्वपि परमार्थतः शुभाशुभा-
नां कर्मणां फलविपाकः। सुखदुःखयोस्तु कुशलाकुशलकर्मविपा-
कजत्वाद्विपाकोपचारः। तत्र सुखो(ऽनुभवः) यस्मिन्नुत्पन्ने वि-
योगेच्छा निरुद्धे च पुनःसंयोगेच्छा जायते। दुःखोऽनुभवः यस्मि-
न्नुत्पन्ने वियोगेच्छा निरुद्धे च पुनरसंयोगेच्छा। अदुःखासुखो
यस्मिन्नुत्पन्ने निरुद्धे चोभयं न जायते। संज्ञा विषयनिमित्तो-

तत् संप्रयु,

नुभवो,

नाथं देवः। परिणामस्तथा तथा यात्यन्योन्यवशादिति। पूर्वस्मात्ततोऽन्य-
थाभावः परिणामः। तथा तथेति तस्य तस्य विकल्पस्योत्पादनतस्तत्त-
दवस्थां प्राप्नोतीत्यर्थः। अन्योन्यवशादिति। तथा हि चक्षुरादिविज्ञानं
स्वशक्तिपरिपोषे वर्तमानं शक्तिविशिष्टस्यालयविज्ञानपरिणामस्य
विज्ञान(?)
निमित्तं सोऽपि आलयविज्ञानपरिणामः चक्षुरादिविज्ञानस्य निमित्तं भवति।
एवमन्योन्यवशाद्यस्मादुभयं प्रवर्तते। तस्मादालयविज्ञानादनेकनि-
मित्तादनेकप्रकारो विकल्पः स स जायते तत्र च वर्तमाने जन्मनि सक-
लस्यविज्ञानात् प्रवृत्तिविज्ञानस्योत्पत्तिर्भवति। तथा ह्यतीतजन्मनि विज्ञप्ति-
मात्रे। अनागतं जन्म वर्तमानजन्मनि ऐधे सति यथा प्रतिसन्धीयते तत्
प्रदर्शयन्नाह।

कर्मणो वासना ग्राहद्वयवासनया सह।
क्षीणे पूर्वविपाकेऽन्यद्विपाकं जनयन्ति तत्॥ १९

इति। कुशलाकुशलात्मिका चेतना कर्म। तेन कर्मणा यदायत्यां
भावाभिनिर्वृत्तये आलयविज्ञाने सामर्थ्यमाहितम्। सा कर्मवासना।
ग्राहद्वयम्। ग्राह्यग्राहो ग्राहकग्राहश्च। तत्र विज्ञानाद्व्यतिरेकेण स्व-
सन्तानव्यतिरिक्तं ग्राह्यमस्तीति य एष ग्राहः स ग्राह्यग्राहः। तच्च वि-
ज्ञानेन प्रतीयते विज्ञायते गृह्यते इति योऽयं निश्चयः स ग्राह-
कग्राहः। पूर्वोत्पन्नग्राह्यग्राहकग्राहाक्षिप्तं भविष्यत्तज्जातीय-
ग्राह्यग्राहकग्राहोत्पत्तिबीजं ग्राहद्वयवासना। तत्र कर्मवास-
नाभेदाद्गतिभेदेनात्मभावभेदः, बीजभेदादङ्कुरभेदवत्।
ग्राहद्वयवासनास्तु सर्वैकर्मवासनानां यथास्वं साक्षिप्रात्म-

भावेऽपादने प्रत्ययान्तं सह्यादिकं प्रतिपद्यते। तद्यथा. अर्वाद्योऽद्= (66)
स्येदपनातीति, एवं च न केवलाः कर्मवासना ग्राहद्वयवासनया, न तु
गृहीत विपाकं जनयन्तीत्युक्तं भवति। अत एवाह। ग्राहद्वयवासन
या सहेति। क्षीणे पूर्वविपाकेऽन्यद्विपाकं जनयन्ति तदिति। पूर्वक
्षिप्तेन कर्मणा यदिष्टं विपाकफलं निर्वर्तितं तस्मिन् क्षीणे प्रति
आक्षेपकालपर्यन्तावस्थिते यथाबलं कर्मवासना ग्राहद्वयवासना-
सहिता उपभुक्ताद्विपाकाद् अन्यद्विपाकं तदेवालयविज्ञानं जन
यन्ति। आलयविज्ञानव्यतिरेकेणान्यस्य विपाकस्याभावात्। क्षी=
णे पूर्वविपाक इत्यनेन शाश्वततां परिहरति। अन्यद्विपाकं जनय
न्तीत्यनेनोच्छेदं। चक्षुरादिविज्ञानव्यतिरिक्तमालयविज्ञानमस्ति
, चक्षुरादि, तदेव च सर्वबीजकं चक्षुरादिविज्ञानमिति। कुत एतत्, आग
मात् युक्तितश्च। उक्तं हि भगवताभिधर्मसूत्रे।

अनादिकालिको धातुः सर्वधर्मसमाश्रयः।
, गति सर्वा, तस्मिन् सति गतिः सर्वा निर्वाणाधिगमोऽपि वा॥

न ह्यालयविज्ञानमन्तरेण संसारप्रवृत्तिर्निवृत्तिर्वा युज्यते। तत्र
संसारप्रवृत्तिर्निकायसभागान्तरेषु प्रतिसन्धिबन्धः। निवृत्तिः सो
पधिशेषो निरुपधिशेषश्च निर्वाणधातुः। तत्रालयविज्ञानेन वि-
ना संस्कारप्रत्ययं विज्ञानं न युज्यते, संस्कारप्रत्ययविज्ञानाभावे प्रवृत्ते- (9a)
रभावः। संसारस्य आलयविज्ञानानभ्युपगमे प्रतिसन्धिविज्ञानं
, कल्प्येत, वा संस्कारप्रत्ययं परिकल्प्येत, संस्कारभावितः षड्विज्ञानकायः।
तत्र ये संस्काराः प्रातिसन्धिक विज्ञानप्रत्ययत्वेन कल्प्यन्ते, तेषां

क्लेशाः प्रधानम्। तथाहि क्लेशाधिपत्यात् कर्म। पुनर्भवाक्षेपसम-
र्थं भवति नान्यथा। तथा आक्षिप्तं पुनर्भवमपि कर्म, क्लेशाधि-
पत्यादेव पुनर्भवमभिनिर्वर्तयति नान्यथा। एवं च क्लेशा एव संसा-
, णे, रप्रवृत्तेः प्रधानतया मूलम्। अतस्तेषु प्रहीणेषु संसारो विनिवर्तते नान्य-
था। कथमालयविज्ञानमन्तरेण तत्प्रहाणं युज्यते। कथं पुनर्न यु-
ज्यते। संमुखीभूतो वा क्लेशः प्रहीयते। बीजावस्थो वा। तत्र संमुखी-
णमार्गस्याविना, [?] भूतः प्रहीयते इति, अनिष्टमेवैतत्। तत्र प्रहाणमार्गस्याभा[?]
, स्यते, वि, वि बीजावस्थोऽपि नैव प्रहीयते। नहि प्रतिपक्ष तदानीं किञ्चिद् द-
ग्धमभ्युपगम्यते। यत्र क्लेशबीजं व्यवस्थितं तत्प्रतिपक्षेण प्र-
हीयेत। (10a) अथ प्रतिपक्षोत्पत्तेरेव क्लेशबीजानुषक्तः कथ्यते। नहि
तत्क्लेशबीजानुषक्तत्वेन तत्प्रतिपक्षो भवितुमर्हति। तथा प्रहीण-
क्लेशबीजानां संसारनिवृत्तिः संभवति। तस्मादवश्यमालय-
विज्ञानं तदन्यविज्ञानसहभूमिः क्लेशोपक्लेशैर्भाव्यते। स्वबीजपु-
ष्ट्याधानत इत्यभ्युपेयम्। ये पुनस्ते तत एव सन्ततिपरिणाम-
विशेषा यथाबलं वासनालाभे सति क्लेशोपक्लेशाः प्रवर्तन्ते,
तेषां चालयविज्ञानव्यवस्थितं बीजं तत्सहभुवा क्लेशप्रतिपक्ष-
मार्गेणापनीयते। तस्मिंश्चापनीते न पुनस्तेनाश्रयेण क्लेशा-
नामुत्पत्तिरिति। सोपधिशेषो निर्वाणधातुः प्राप्यते। पूर्वकर्माक्षि-
प्तजन्मनिरोधे च। ततोऽन्यजन्माप्रतिसन्धानान्निरुपधिशेषो नि-
र्वाणधातुः। नहि कर्म विद्यमानमपि क्लेशेषु प्रहीणेषु सहका-
रिकारणाभावात् पुनर्भवमभिनिर्वर्तयितुं समर्थम्। एवमालय-

तां संधाय सर्वधर्माणां देशिता निःस्वभावता [23] न च एते
स्वभावा न सन्त्यर्थोऽस्तीति ज्ञापनार्थं संध्याभिदेशः स्वेन स्वे-
न लक्षणेन विद्यमानत्वप्रसक्तीति। त्रिविधा निःस्वभावता
लक्षणनिःस्वभावता उत्पत्तिनिःस्वभावता परमार्थनिःस्वभाव-
ता च। सर्वधर्माः परिकल्पितपरतन्त्रपरिनिष्पन्नात्मकाः।
एतेषां त्रिविधस्य स्वभावस्य या यस्य निःस्वभावता तां तस्य
प्रदर्शयन्नाह।

प्रथमो लक्षणेनैव निःस्वभावोऽपरः पुनः।
न स्वयंभाव एतस्येत्यपरा निःस्वभावता ॥ २४
धर्माणां परमार्थश्च स यतस्तथतापि सः।

प्रथमः परिकल्पितस्वभावः अयं च लक्षणेनैव निःस्वभावस्त-
ल्लक्षणस्योत्प्रेक्षितत्वात्। रूपलक्षणं रूपं अनुभवलक्ष-
णा वेदनेत्यादि। अतश्च स्वरूपाभावात् खपुष्पवत् लक्षणे-
नैव निःस्वभावः अपरः पुनरिति परतन्त्रस्वभावः। न स्वयंभाव
एतस्य मायावत् परप्रत्ययेनोत्पत्तेः। अतश्च यथा प्रख्या-
ति तथास्योत्पत्तिर्नास्तीति, अतोऽस्य उत्पत्तिनिःस्वभावतेत्यु-
च्यते। धर्माणां परमार्थश्च स यतस्तथतापि सोऽपीति (12b)। परमं हि
लोकोत्तरज्ञानं निरुत्तमत्वात् तस्यार्थः परमार्थः। अथवा आका-
शवत् सर्वत्रैकरसार्थेन वैमल्याविकारार्थेन च परिनिष्पन्न-
स्वभावः परमार्थ उच्यते। स यस्मात् परिनिष्पन्नः स्वभावः सर्व-
धर्माणां परतन्त्रात्मकानां परमार्थः, तद्धर्मतेति कृत्वा तस्मात् परि-

रूप, लक्षण,

निष्पन्न एव स्वभावः परमार्थ इति निःस्वभावता परिनिष्प-
न्नस्याभावस्वभावत्वात्। किं पुनः परमार्थाभिधानेनैव
परिनिष्पन्नोऽभिधातव्यो नेत्याह। किं तर्हि तथतापि सः
-अपिशब्दान्न केवलं तथताशब्देनैवाभिधातव्यः। किं तर्हि
यावन्तो धर्मधातुपर्यायाः सर्वैस्तैरभिधातव्य इति।

सर्वकालं तथाभावात्।

तथता। तथा हि पृथग्जनशैक्षाशैक्षावस्थासु सर्वकालं
तथैव भवति, अनन्यथार्थेन तथतेत्युच्यते, किं पुनः सैषा तथता
परिनिष्पन्न एव विज्ञप्तिमात्रता, उतान्या विज्ञप्तिमा-
त्रता, अत आह।

सैव विज्ञप्तिमात्रता। २५

अभिन्नलक्षणावबोधार्थं प्रयोजनम्।

तच्चित्तं,

नास्ति चित्तं तदा तस्मात् दर्शनात्।
नास्ति ध्यानाच्च चित्तप्राप्युपलम्भः प्रहीयते॥
नोपलम्भस्तदा धातुः प्रसादे भवतान्मयात्।
सर्वावरणनिर्मोक्षं विभुत्वं लभते तदा॥

इति। सैव विज्ञप्तिमात्रतेत्यनेन यत्नेनाभिसमय उक्तः। यदि
विज्ञप्तिमात्रमेवेदम्, कस्माच्चक्षुःश्रोत्रघ्राणरसनकायैर्न रूप-
शब्दगन्धरसस्पर्शान् गृह्णातीत्यत आह।

विज्ञा…,

यावद्विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठति।
ग्राहद्वयस्यानुशयस्तावन्न विनिवर्तते॥ २६

अथवा, यास्ताः कर्मवासना ग्राहद्वयवासनासहिताः क्षीणे पूर्व-
विपाके ऽन्यद्विपाकं जनयन्तीत्युक्तम्, तासां कथं प्रहाणमनु-
ष्ठानक्रमेणेत्यत आह। यावद्विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठतीति
विस्तरः। यावच्चित्तधर्मतायां विज्ञप्तिमात्रसंशब्दितायां वि-
ज्ञानं नावतिष्ठति, किं तर्हि ग्राह्यग्राहकोपलम्भे चरति ग्राहद्व-
यम्। ग्राह्यग्राहे ग्राहकग्राहश्च तस्यानुशयस्तदाहितम्, अ-
नागतग्राहद्वयोत्पत्तये बीजं अतश्च विज्ञप्ते यावदद्व-
लक्षणे विज्ञप्तिमात्रे योगिनश्चित्तं न प्रतिष्ठितं भवति,
तावन्न ग्राह्यग्राहकानुशयो विनिवर्तते प्रहीयत इत्यर्थः।
अतश्च बहिर्मुखमात्रग्रहणेन धर्मातिरेकोपलम्भात्प्रहाणं
दुष्करमिति। अतोऽस्यैव भवति, अहं चक्षुरादिभिः रूपा-
दीन्यहं पश्यामीति, पुद्गलानां वक्तव्यं किम्, अर्थरहितचित्त-
मात्रोपलम्भात् चित्तधर्मभावस्थानं नेत्याह। किं तर्हि।

विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भतः।
स्थापयन्नग्रतः किंचित् तन्मात्रे नावतिष्ठते॥ २७

इति, अथवा यः पुनरभिमानिकः श्रुतमात्रकेणाभिमाना-
त्, अहं विज्ञप्तिमात्रतायां शुद्धायां स्थित इति, तदुद्देशप्रद-
र्शनार्थमाह। विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भत इत्यादि।
विज्ञप्तिमात्रमेवेदं, अर्थरहितं न बाह्योऽर्थोऽस्तीति एवमु-
पलम्भतो ग्रहणात् चित्तीकरणात् इत्यर्थः। अग्रत इत्य-
भिमुखं स्थापयन्निति यथाश्रुतं संनहत्युपकारस्यात्।

ग्रंथालं

योगाचारालम्बनतामं किञ्चिदित्याह (136) । अस्थिसंकलिकं वा नीलकं वापि पूयकं वा विपटुकं वा आध्यात्मिकादिकं वा तन्मात्रे नावतिष्ठते विज्ञानोपलम्भग्रहणात् । कदा पुन-

प्रतिष्ठित

र्विज्ञानग्राहकस्य ग्रहणं चित्तमात्रतायां वा प्रतिष्ठितो भव-तीत्यत आह ।

यदा त्वालम्बनं विज्ञानं नैवोपलभते तदा ।
स्थितं विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात् ॥२८

इति । यस्मिन् काले देशनालम्बनं अववादालम्बनं प्राकृतं वा रूपशब्दाद्यालम्बनं विज्ञानं बहिश्चित्तता नोपलभते न पश्यति न गृह्णाति नाभिनिविशते, यथाभूतार्थदर्शना त्व आत्मचिन्तवत् । तस्मिन् काले विज्ञानग्राहकस्य ग्रहणं स्वचित्तधर्मतायां च प्रतिष्ठितो भवति । अत्रैव कारण-माह । ग्राह्याभावे तदग्रहादिति । ग्राह्ये सति ग्राहकं भवति न तु ग्राह्याभाव इति । ग्राह्याभावे ग्राहकताभावमपि प्रतिपद्यते । न केवलं ग्राह्याभावम् । एवं हि समसमालम्ब्या-लम्बकं निर्विकल्पं लोकोत्तरं ज्ञानमुत्पद्यते । ग्राह्यग्राह-काभिनिवेशानुशया प्रहीयन्ते । स्वचित्तधर्मतायां च चित्त-मेव स्थितं भवति । यदैवं विज्ञप्तिमात्रतायां चित्तमवस्थितं भवति । तदा कथं व्यपदिश्यत इत्याह ।

अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत् ।
आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः ॥ २९

(14a)

स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः ।

मुनेरिति, सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुनेः ॥ ३

इति । तदेव श्लोकद्वयेन दर्शनमार्गमारभ्योक्तविशेष----
ध्यानसंपत्तिम् उपविता । विज्ञप्तिमात्रप्रविष्टो योगिनः तत्र
ग्राहकचित्ताभावात्, ग्राह्यार्थानुपलम्भाच्च । अचिन्त्योऽनुप-
मोऽसौ अनुचिततत्वात् लोके ----चारणाभावात् । निर्वि-
कल्पत्वाच्च लोकानुत्तीर्णमिति ज्ञानं लोकोत्तरं च तदिति ।
तस्य ज्ञानस्यानन्तरमाश्रयस्य परावृत्तिर्भवतीति ज्ञापनार्थ-
माह । आश्रयस्य परावृत्तिरिति । आश्रयोऽत्र सर्वबीजकमा-
लयविज्ञानम् । तस्य परावृत्तिर्या दौष्ठुल्यविपाकद्वयासत्ता-
भावेन निवृत्तौ सत्यां कर्मण्यताधर्मकायद्वयज्ञानभावेन
परावृत्तिः सा पुनराश्रयपरावृत्तिः कस्य प्रहाणात् प्राप्यते ।
दौ, अत आह । द्विधा दौष्ठुल्यहानितः, द्विधेति क्लेशावरणदौष्ठु-
ल्यं, ज्ञेयावरणदौष्ठुल्यञ्च । दौष्ठुल्यमाश्रयस्याकर्मण्य-
ता । तत्पुनः क्लेशज्ञेयावरणयोर्बीजम् । सा पुनराश्रयपरावृत्तिः,
श्रावकादिगता दौष्ठुल्यहानितः प्राप्यते । यदाह । विमुक्तिकाय-
इति, बोधिसत्वगता द्वि दौष्ठुल्यहानितः प्राप्यते । यदाह । धर्माख्योऽपि
(14b)
मुनेरिति, महामुनेरिति, द्विधा आवरणभेदेन सास्रवनिरास्रव च-
आश्रयपरावृत्तिरुक्ता । अत्र गाथा ।

ज्ञेयमादानविज्ञानं द्वयावरणलक्षणम् ।
सर्वदा क्लेशबीजबन्धस्थानं द्वयोः ॥

इति श्रावकबोधिसत्त्वयोः। अत्राह्य क्लेशबीजम्। ह्यारह्य
ह्यावरणबीजम्। तद् द्वयात सर्वज्ञतामपि भवतीति।
स एवानास्रवो धातुरिति, स एवाश्रयपरावृत्तिलक्षणम्।
अनास्रवो धातुरित्युच्यते। निर्दौष्ठुल्यात्, सर्वास्रवविग-
त इत्यत्रायः। आर्यधर्महेतुत्वाद् धातुः। हेत्वर्थो ह्यत्र
धातुशब्दः। अचिन्त्यस्तर्कागोचरत्वात्, प्रत्यात्मवेद्यत्वा-
त्, दृष्टान्ताभावाच्च, कुशलो विशुद्धालम्बनत्वात्, क्षे-
मत्वात्, अनास्रवधर्ममयत्वाच्च, ध्रुवो नित्यत्वात्,
अक्षयतया, सुखो नित्यत्वादेव, यदनित्यं तद्दुःख-
म्, अयं च नित्य इत्यस्मात् सुखः। क्लेशावरण-
प्रहाणात् श्रावकाणां विमुक्तिकायः। स एवाश्रय-
परावृत्तिलक्षणो धर्माख्यो, प्युच्यते। महामुने भू-
मिपारमिताभावनया क्लेशज्ञेयावरणप्रहाणात्।
आश्रयपरावृत्तिसमुदागमात् महामुने धर्मकाय
इत्युच्यते। संसारापरित्यागात्, तदुभयसंक्लेश-----
त्यागात् सर्वधर्मविभुत्वलाभतश्च धर्मकाय इत्युच्यते,
महामुनेरिति परममौनेययोगाद् बुद्धो भगवान्म
हामुनीरिति ॥

त्रिंशिकाविज्ञप्तिभाष्यं समाप्तम्।

कृतिराचार्यस्थिरमतेः।

(मूलताडपत्रपुस्तके प्रथमपत्रं नास्ति)

नियमः सन्तानानियमः कृत्यक्रिया च न युज्यते, न खलु न युज्यते, यस्मात् देशादिनियमः सिद्धः स्वप्नवत् स्वप्न इव स्वप्नवत्, कथं तावत्स्वप्ने विनाप्यर्थेन क्वचिदेव देशे किञ्चिद्भ्रमरारामस्त्रीपुरुषादिकं दृश्यते न सर्वत्र, तत्रैव च देशे कदाचिद्दृश्यते न सर्वकालमिति सिद्धो विनाप्यर्थेन देशकालनियमः। प्रेतवत्पुनः सन्तानानियमः। सिद्ध इति वर्तते, प्रेतानामिव प्रेतवत्, कथं सिद्धः समं सर्वैः पूयनद्यादिदर्शने, पूयपूर्णा नदी पूयनदी, घृतघटवत्, तुल्यकर्मविपाकावस्था हि प्रेताः सर्वेऽपि पूयपूर्णां नदीं पश्यन्ति नैक एव। यथा पूयपूर्णामेवं मूत्रपुरीषादिपूर्णां दण्डासिधरैश्च पुरुषैरधिष्ठितामित्यादिग्रहणेन। एवं सन्तानानियमो विज्ञप्तीनामसत्यप्यर्थे सिद्धः। स्वप्नोपघातवत्कृत्यक्रिया सिद्धेति वेदितव्यम्। यथा स्वप्ने द्वयसमापत्तिमन्तरेण शुक्रविसर्गलक्षणः स्वप्नोपघातः, एवं तावदन्या- मै दृष्टान्तैर्देशकालनियमादिचतुष्टयं सिद्धम्। नरकवत्पुनः सर्वं सिद्धमिति वेदितव्यम्, नरकेष्विव नरकवत्, कथं सिद्धं नरकपालादिदर्शने तैश्च बाधने, यथा हि नरकेषु नारकाणां नरकपालादिदर्शनं देशकालनियमेन सिद्धं श्ववायसा-
[2A]
यसपर्वताद्यागमनगमनदर्शनं चेत्यादिग्रहणेन सर्वेषां नैकस्यैव तैश्च तद्बाधनं सिद्धमसत्स्वपि नरकपालादिषु समानस्वकर्मविपाकाधिपत्यात्, तथान्यत्रापि सर्वमेतद्देशकालनियमादिचतुष्टयं सिद्धमिति वेदितव्यं किं पुनः कारणं नरकपालास्ते च श्वानो वायसा-

श्च सत्त्वा नेष्यन्ते, अयोगात्, न हि ते नारका युज्यन्ते तथैव तद्दुःखाप्रतिसंवेदनात्। परस्परं यातयतामिमे नारका इमे नरकपाला इति व्यवस्था न स्यात्, तुल्याकृतिप्रमाणबलानाञ्च परस्परं यातयतां न तथा भयं स्यात्, दाहदुःखञ्च प्रदीप्तायामयोमय्यां भूमावसहमानाः कथं तत्र परान्यातयेयुः। अनारकाणां वा नरके कुतः सम्भवः, कथं तावत्तिरश्चां स्वर्गे सम्भवः, एवं नरके ऽपि तिर्यक्प्रेतविशेषाणां नरकपालादीनां सम्भवः स्यात्।

तिरश्चां सम्भवः स्वर्गे यथा न नरके तथा।
न प्रेतानां यतस्तज्जं दुःखं नानुभवन्ति ते॥ ५॥

ये हि तिर्यञ्चः स्वर्गे सम्भवन्ति ते तद्भाजनलोकसुखसंवर्तनीयेन कर्मणा तत्र सम्भूता तज्जं सुखं प्रत्यनुभवन्ति। न त्वेवं नरकपालादयो नारकं दुःखं प्रत्यनुभवन्ति तस्मान्न तिरश्चां सम्भवो युक्तो नापि प्रेतानाम्, तेषां तर्हि नारकाणां कर्मभिस्तत्र भूतविशेषाः सम्भवन्ति
[2B]
वर्णाकृतिप्रमाणबलविशिष्टा ये नरकपालादिसंज्ञां प्रतिलभन्ते, तथा च परिणमन्ति यद्विविधां हस्तविक्षेपादिक्रियां कुर्वन्तो दृश्यन्ते भयोत्पादनार्थं यथा मेषाकृतयः पर्वता आगच्छन्तो गच्छन्त ---------- वने च कण्टका अधोमुखीभवन्त ऊर्ध्वमुखीभवन्तश्चेति। न ते न सम्भवन्त्येव,

यदि तत्कर्मभिस्तत्र भूतानां सम्भवस्तथा।
इष्यते परिणामश्च किं विज्ञानस्य नेष्यते॥६॥

विज्ञानस्यैव तत्कर्मभिस्तथा परिणामः कस्मान्नेष्यते किं पुनर्भूतानि कल्प्यन्ते। अपि च।

कर्मणो वासनान्यत्र फलमन्यत्र कल्प्यते।
तत्रैव नेष्यते यत्र वासना किंनु कारणम्॥ ७॥

येन हि कर्मणा नारकाणां तत्र तादृशो भूतानां सम्भवः कल्प्यते परिणामश्च तस्य कर्मणो वासना तेषां विज्ञान--- सन्निविष्टा नान्यत्र, यत्रैव च वासना तत्रैव तस्याः फलं तादृशो विज्ञानपरिणामः किं नेष्यते. यत्र वासना नास्ति तत्र तस्याः फलं कल्प्यत इति किमत्र कारणम्. आगमः कारणम्. यदि विज्ञानमेव रूपादिप्रतिभासं स्यान्न रूपादिकोर्थस्तदा रूपाद्यायतनास्तित्वं भगवता नोक्तं स्यात्, अकारणमेतद् यस्मात् [रूपाद्यायतनास्तित्वं तद्विनेयजनं प्रति [अभिप्रायवशादुक्तं उपपादुकसत्त्ववत् ॥८॥] यथास्ति सत्त्व- [3A] उपपादुक इत्युक्तं भगवताऽभिप्रायवशाच्चित्तसन्तत्यनुच्छेदमायत्यामभिप्रेत्य। नास्तीह सत्त्व आत्मा वा धर्मास्त्वेते सहेतुका इति वचनात्, एवं रूपाद्यायतनास्तित्वमप्युक्तं भगवता तद्देशनाविनेयजनमधिकृत्येत्याभिप्रायिकं तद्वचनम्. कोत्राभिप्रायः, "यतः स्वबीजाद्विज्ञप्तिर्यदाभासा प्रवर्तते। द्विविधायतनत्वेन ते तस्या मुनिरब्रवीत्" ॥ ९ ॥ किमुक्तं भवति, रूपप्रतिभासा विज्ञप्तिर्यतः स्वबीजात्परिणामविशेषप्राप्तादुत्पद्यते, तच्च बीजं यत्प्रतिभासा च सा, ते तस्या विज्ञप्तेश्चक्षूरूपायतनत्वेन यथाक्रमं भगवानब्रवीत्। एवं यावत्स्प्रष्टव्यप्रतिभासा विज्ञप्तिर्यतः



स्वबीजात्परिणामविशेषादुत्पद्यते, तच्च बीजं यत्प्रतिभासा च सा ते तस्याः कायस्प्रष्टव्यायतनत्वेन यथाक्रमं भगवानब्रवीदित्ययमभिप्रायः। एवं पुनरभिप्रायवशेन देशयित्वा को गुणः, तथा पुद्गलनैरात्म्यप्रवेशो हि। तथाहि देशनाते पुद्गलनैरात्म्यं प्रविशन्ति। द------- नषड्वं प्रवर्तते न तु कश्चिदेको द्रष्टास्ति न यावन्मन्तेत्येवं विदित्वा ये पुद्गलनैरात्म्यदेशनाविनेयास्ते पुद्गलनैरात्म्यं प्रविशन्ति, अन्यथा पुनर्देशना धर्मनैरात्म्यप्रवेशः, अन्यथेति विज्ञप्तिमात्रदेशना, कथं धर्मनैरात्म्यप्रवेशः। विज्ञप्तिमात्रमिदं रूपादिधर्मप्रतिभासमुत्पद्यते न तु रूपादिलक्षणो धर्म [3B] --------- ति विदित्वा' यदि तर्हि सर्वथा धर्मो नास्ति तदपि विज्ञप्तिमात्रं नास्तीति कथं तर्हि व्यवस्थाप्यते, न खलु सर्वथा धर्मो नास्तीत्येवं धर्मनैरात्म्यप्रवेशो भवति, अपि तु, कल्पितात्मना, यो बालैर्धर्माणां स्वभावो ग्राह्यग्राहकादिः परिकल्पितस्तेन कल्पितेनात्मना तेषां नैरात्म्यं न त्वनभिलाप्येनात्मना यो बुद्धानां विषय इति। एवं विज्ञप्तिमात्रस्यापि विज्ञप्त्यन्तरपरिकल्पितेनात्मना नैरात्म्यप्रवेशात्, विज्ञप्तिमात्रव्यवस्थापनया सर्वधर्माणां नैरात्म्यप्रवेशो भवति न तु तद --स्त्यपवादतः, इतरथा हि विज्ञप्तेरपि विज्ञप्त्यन्तरमर्थः स्यादिति विज्ञप्तिमात्रत्वं न सिध्येतार्थवतीत्वाद्विज्ञप्तीनाम्। कथं पुनरिदं प्रत्येतव्यमनेनाभिप्रायेण भगवता रूपाद्यायतनास्तित्वमुक्तं न पुनः सन्त्येव तानि यानि रूपादिविज्ञप्तीनां प्रत्येकं विषयीभवन्तीति।

यस्मान्न तदेकं न चानेकं विषयः परमाणुशः। न च ते संहता यस्मात्पर-
माणुर्न सिध्यति॥ किमुक्तं भवति, यत्तद्रूपादिकमायतनं रूपादि-
विज्ञप्तीनां प्रत्येकं विषयः स्यात्तदेकं वा स्याद्यथावयविरूपं
कल्प्यते वैशेषिकैः, अनेकं वा परमाणुशः संहता वा त एव परमाण-
वः, न तावदेकं विषयो भवत्यवयवेभ्योऽन्यस्यावयविरूपस्य क्वचि-
[5A]
दप्यग्रहणात्, नाप्यनेकं परमाणूनां प्रत्येकमग्रहणात्, नापि ते
संहता विषयीभवन्ति, यस्मात्परमाणुरेकं द्रव्यं न सिध्यति, कथं न सिध्यति,
यस्मात् "षट्केन युगपद्योगात्परमाणोः षडंशता" षड्भ्यो दिग्भ्यः षड्भिः
परमाणुभिर्युगपद्योगे सति परमाणोः षडंशतां प्राप्नोति, एकस्य यो
देशस्तत्रान्यस्यासंभवात्। "षण्णां समानदेशत्वात्पिण्डः स्यादणुमात्रकः" "१२"
अथ य एवैकस्य परमाणोर्देशः स एव षण्णां तेन सर्वेषां समानदेशत्वा-
त्सर्वः पिण्डः परमाणुमात्रः स्यात् परस्पराव्यतिरेकादिति न कश्चित्पिण्डो
दृश्यः स्यात्, नैव हि परमाणवः संयुज्यन्ते निरवयवत्वात् मा भूदेष दोष-
प्रसङ्गः, संहतास्तु परस्परं संयुज्यन्त इति काश्मीरवैभाषिकास्त इदं
प्रष्टव्याः, यः परमाणूनां संहतो न स तेभ्योऽर्थान्तरमिति।

परमाणोरसंयोगे तत्संहतेऽस्ति कस्य सः।

संयोग इति वर्तते, न चानवयवत्वेन तत्संयोगो न सिध्यति, "१३" अथ
संहता अप्यन्योन्यं न संयुज्यन्ते न तर्हि परमाणूनां निरवयवत्वात्सं-
योगो न सिध्यतीति वक्तव्यम्, सावयवस्यापि हि संहातस्य संयोगान-



भ्युपगमात्तस्मात्परमाणुरेकं द्रव्यं न सिध्यति, यदि च परमाणोः
संयोग इष्यते यदि वा नेष्यते।

दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यते।

[6B]
अन्यो हि परमाणोः ———— यावदधोदिग्भाग इति दिग्भाग
भेदे सति कथं तदात्मकस्य परमाणोरेकत्वं योक्ष्यते, छायावृती कथं वा,
यद्येकैकस्य परमाणोर्दिग्भागभेदो न स्यादादित्योदये कथमन्यत्र
या ——— भवत्यन्यत्रातपः, न हि तस्यान्यः प्रदेशोऽस्ति यत्रातपो न
स्यात्, आवरणञ्च कथं भवति परमाणोः परमाण्वन्तरेण यदि दिग्भा-
गभेदो नेष्यते, न हि कश्चि ——— ः परभागोऽस्ति यत्रागमनाद-
न्येनान्यस्य प्रतिघातः स्यात्, असति च प्रतिघाते सर्वेषां समानदेश-
त्वात्सर्वः संहतः परमाणुमात्रः स्यादित्य ——— किमेवं नेष्यते पिण्डस्य
ते छायावृती न परमाणोरिति, किं खलु परमाणुभ्योऽन्यः पिण्ड
इष्यते यस्य ते स्यातां नेत्याह, अन्योन्यपिण्डश्चेन्न तस्य ते ———
न्यः परमाणुभ्यः पिण्ड इष्यते न ते तस्येति सिद्धं भवति, सन्निवेशपरि-
कल्प एष परमाणुः संहत इति वा किमनया चिन्तया लक्षणन्तु रूपा
——— न प्रतिषिध्यते, किं पुनस्तेषां लक्षणं चक्षुरादिविषयत्वं
नीलादित्वञ्च तदेवेदं संप्रधार्यते, यत्तच्चक्षुरादीनां विषयो
नीलपीतादिकमिष्यते, किं तदेकं द्रव्यम ——— दनेकमिति,
किञ्चातः, अनेकत्वे दोष उक्तः।

स
सत्वानां कथं सिध्यति, असति सदृशसंस्पर्शे न दृष्टान्तमात्र।
अन्योन्याधिपतित्वेन विज्ञप्तिनियमो मिथः।
सर्वेषां हि सत्वानामन्योन्यविज्ञप्त्याधिपत्येन मिथो विज्ञप्तेर्नियमो
भवति यथायोगं, मिथ इति परस्परतः। अतः सन्तानान्तरविज्ञप्ति-
विशेषात् सन्तानान्तरे विज्ञप्तिविशेष उत्पद्यते नार्थविशेषात्। यदि
यथा स्वप्ने निरर्थिका विज्ञप्तिरेवं जाग्रतोऽपि स्यात् कस्मात् कुशला-
कुशलसमुदाचारे सुप्तासुप्तयोस्तुल्यं फलमिष्टानिष्टमायत्यां न
भवति यस्मात्।

स्वप्ने ते
मिद्धेनोपहतं चित्तं नासमं फलम्। १८

इदमत्र कारणं नत्वर्थसद्भावः। यदि विज्ञप्तिमात्रमेवेदं न कस्य-
चित्कायोऽस्ति न वाक् कथमुपक्रम्यमाणानामौरभ्रिकादिभिरुरभ्रा-
दीनां मरणं भवति, अतत्कृते वा तन्मरणे कथमौरभ्रिकादीनां
घा
प्राणातिपातावद्येन योगो भवति।

णे
मरणं परविज्ञप्तिविशेषाद्विक्रिया यथा।
स्मृतिलोपादिकान्येषां पिशाचादिमनोवशात्॥ १९॥

यथा हि पिशाचादिमनोवशादन्येषां स्मृतिलोपस्वप्नदर्शन-
भूतग्रहावेशविकारा भवन्ति। ऋद्धिवन्मनोवशाच्च, यथा सार-
ण णस्यार्यमहाकात्यायनाधिष्ठानात् स्वप्नदर्शनम्। आरण्यकर्षिमनः
[5B] पुराजपुः। यथा परविज्ञप्तिविशेषाधिपत्यात्परेषां जीवि(ते)ते
प्रदोषाच्च वेम [redacted]
न्द्रियविरोधिनी काचिद्विक्रियोत्पद्यते यया सभागसन्ततिविच्छेदाख्यं मरणं भवतीति वेदितव्यम्।



कथं वा दण्डकारण्यं शून्यत्वमृषिकोपतः।
यदि परविज्ञप्तिविशेषाधिपत्यात्सत्वानां मरणं नेष्यते. मनो
ता
दण्डस्य हि महासावद्यत्वं साधयता भगवतो उपालिर्गृहपतिः
पृष्ट(ः) कच्चिते(त्ते) गृहपते! श्रुतं केन तानि दण्डकारण्यानि
मातङ्गारण्यानि कलिङ्गारण्यानि शून्यानि मेध्यीभूतानि
तेनोक्तं श्रुतं मे भो! गौतम ऋषीणां मनःप्रदोषेणेति।

मनोदण्डो महावद्यः कथं वा तेन सिध्यति॥ २०॥

यद्येवं कल्प्यते, तदभिप्रसन्नैरमानुषैस्तद्वासिनः सत्वा
उत्सादिता न त्वृषीणां मनःप्रदोषान्मृता इत्येवं सति कथं
तेन कर्मना(णा) मनोदण्डः कायवाग्दण्डाभ्यां महावद्यतमः
सिद्धो भवति तन्मनःप्रदोषमात्रेण तावतां सत्वानां मरणात्
सिध्यति। यदि विज्ञप्तिमात्रमेवेदं परचित्तविदः किं पर-
चित्तं जानन्त्यथ न, किं चातः, यदि न जानन्ति कथं
परचित्तविदो भवन्ति. अथ जानन्ति परचित्तविदां ज्ञान-
मयथार्थं कथम्. यथा स्वचित्तज्ञानं तदपि कथमय-
थार्थम्. अज्ञानाद्यथा बुद्धस्य गोचरः, यथा तन्निर-
[6A]
भिलाप्येनात्मना बुद्धानां गोचरः, तथा तदज्ञानात्तदु-
भयं न यथार्थं वितथप्रतिभासतया ग्राह्यग्राहकविकल्प
स्याप्रहीणत्वात्; अनन्तविनिश्चयप्रभेदागाधगाम्भीर्यायां
विज्ञप्तिमात्रतायां.

विज्ञप्तिमात्रतासिद्धिः स्वशक्तिसदृशी मया ।
कृतेयं सर्वथा सा तु न चिन्त्या -

सर्वप्रकारा तु सा मादृशैश्चिन्तयितुं न शक्यते तर्कविषयत्वात्
कस्य पुनः सा सर्वथा गोचर इत्याह -

बुद्धगोचरः ॥ २२ ॥

बुद्धानां हि सा भगवतां सर्वप्रकारं गोचरः सर्वाकार-
सर्वज्ञेयज्ञानाविघातादिति ।

विंशतिका विज्ञप्तिमात्रतासिद्धिः
कृतिरियमाचार्यवसुबन्धोः ।

[7B]

ग्रन्थमानमस्य भाष्यस्य ५६०

(आदितः ६ पत्र पर्यन्तं मूलपुस्तके त्रुटिर्वर्तते ।)

एष त्रिंशिका ग्रन्थः ।

ञातना चित्ताभिसंस्कारो मनसश्चेष्टा यस्यां
सत्यामालम्बनं प्रति चेतसः प्रस्पन्द इव भवति, अयस्कान्तवशादयः
प्रस्पन्दवत् । वेदना त्रिविधा, सुखा दुःखा अदुःखासुखा च । धर्मा
श्चतुःप्रकाराः, कुशला अकुशला अनिवृताव्याकृता निवृताव्याकृता
श्च, तत्रालयविज्ञाने विदित सामान्योपदेशेन न विज्ञायते तिसृणां
वेदनानां कतमा वेदना, तथा तदपि किं कुशलमकुशलमनिवृता-
व्याकृतं निवृताव्याकृतमिति न विज्ञायते इत्यत आह ।

उपेक्षा वेदना तत्रानिवृताव्याकृतञ्च तत् ।

तत्रेत्यालयविज्ञानमेव प्रकृतत्वात् संबध्यते, उपेक्षैवालयविज्ञाने
वेदना न सुखा न दुःखा, तयोः परिच्छिन्नालम्बनाकारत्वात्, राग-
द्वेषानुशयितत्वाच्च, अनिवृताव्याकृतञ्च तदालयविज्ञानमिति
प्रकृतम् । तत्रानिवृतग्रहणं निवृतव्यवच्छेदार्थम्, अव्याकृतग्रहणं
कुशलाकुशलव्यवच्छेदार्थम्, मनोभूमिकैः रागानुशयैः रूपक्लेशैरना-
वृतत्वादनिवृतम्, विपाकत्वाद्विपाकं प्रति कुशलाकुशलत्वेना-
व्याकरणादव्याकृतम्, तथा स्पर्शादयः, यथा आलयविज्ञानमेवा-
नेनविपाकोऽपरिच्छिन्नालम्बनाकारं सदा स्पर्शादिभिरन्वितम्,
तत्र चोपेक्षैव वेदनानिवृताव्याकृतञ्च, तथा स्पर्शादयोऽप्येकान्ते-
न विपाका एवापरिच्छिन्नालम्बनाकाराश्च आत्मानं हित्वा इतरै-
श्चतुर्भिरालयविज्ञानेन चानित्यमनुगता स्तेषु चोपेक्षैव वेदना
अनिवृताव्याकृता आलयविज्ञानवत्, न हि विपाकेन

[7A]

संप्रयुक्तानामविपाकत्वमपरिच्छिन्नालम्बनाकारेण चापरिच्छिन्नालम्ब-
नाकारत्वं संभवति, एवमन्यत्रापि वाच्यम्, किं पुनस्तदालयविज्ञान-
मेकमभिन्नमासंसारमनुवर्तते, उत संतानेन, न हि तदेकमभिन्न-
मनुवर्तते क्षणिकत्वात्, किं तर्हि [प्र]वर्तते, स्रोतसौघवत्(तु), तच्चाल-
यविज्ञानमेव संबध्यते, तत्र स्रोतो हेतुफलयोर्नैरन्तर्यप्रबन्धेन प्रवृत्तिः,
उदकसमूहस्य पूर्वापरभागाविच्छेदेन प्रवाह ओघ इत्युच्यते, यथा
ह्योघस्तृणकाष्ठगोमयादीनाकर्षयन्गच्छति, एवमालयविज्ञानमपि
पुण्यापुण्यानेञ्ज्यकर्मवासनानुगतं स्पर्शमनस्कारादीनाकर्षयत्स्रोत-
सा संसारमव्युपरतं प्रवर्तत इति, तस्यैवं स्रोतसा प्रवृत्तस्य कस्यामव-
स्थायां व्यावृत्तिरित्याह [तस्य व्यावृत्तिरर्हत्वे] इदं पुनरर्हत्वं य-
दा योगादर्हन्नित्युच्यते, कस्य पुनर्योगादर्हन्नित्युच्यते, क्षयज्ञानानुत्पाद-
ज्ञानलाभात्, तस्यां ह्यवस्थायामालयविज्ञानाश्रितदौष्ठुल्यनि-
रवशेषप्रहाणादालयविज्ञानं व्यावृत्तं भवति, सैवार्हदवस्था,
उक्तः सविभङ्गो विपाकपरिणामः। इदानीं मननाख्यं द्वितीयं [18]
परिणाममाह [तदाश्रित्य प्रवर्तते] इति विस्तरः, तत्र यथा चक्षुरा-
दिविज्ञानानां चक्षुरादय आश्रयत्वेन रूपादयश्चालम्बनत्वेन
प्रसिद्धाः, नैवं क्लिष्टस्य मनस आश्रय आलम्बनं वा प्रसिद्धम्,
न च विज्ञानमाश्रयालम्बननिरपेक्षं युज्यत इत्यतः क्लिष्टस्य मनस
आश्रयालम्बनप्रतिपादनार्थं निरुक्तिप्रतिपादनार्थञ्चाह।

1 (p. 13) TrBh

तदाश्रित्य प्रवर्तते।      तदाश्रित्य प्रवर्तते।
तदालम्बं मनोनाम विज्ञानं मननात्मकम्॥५॥
तदाश्रित्य प्रवर्तत इति तच्छब्देनालयविज्ञानमभिसंबध्यते, तद्वास-
नाश्रयो ह्यालयविज्ञानमतस्तदाश्रित्य प्रवर्तते संतानेनोत्पद्यत
इत्यर्थः, अथवा यस्मिन्धातौ भूमौ वाऽऽलयविज्ञानं विपाकस्तद-
पि क्लिष्टं मनस्तद्धातुकं तद्भूमिकं चेति, तत्प्रतिबद्धवृत्तित्वात्तदाश्रित्य
प्रवर्तते, तदालम्बमिति आलयविज्ञानालम्बनमेव सत्कायदृष्ट्यादिभिः
संप्रयोगादहं ममेत्यालयविज्ञानालम्बनत्वात्, कथं पुनर्यत एव
चित्तादुत्पद्यते तदेवालम्बनं भवति, यथा तदनिच्छतां केषांचि-
त्कस्यांचिदवस्थायां मत एव चित्तान्मनोविज्ञानमुत्पद्यते तदा-
लम्बनमेव तदुत्पद्यते। मनो नाम विज्ञानमिति। मन इति नाम
आख्या यस्य विज्ञानस्य तदालयविज्ञानमाश्रित्य प्रवर्तते, तदाल-
म्बनञ्च मनो नामेत्यनेनालयविज्ञानात्प्रवृत्तिविज्ञानाच्च व्यवच्छि-
नत्ति, तत्पुनः किंस्वभावमित्याह [मननात्मकमिति,] एवं मनना-
त्मकत्वान्मन इत्युच्यते। नैरूप्येन विधिना विज्ञानस्वरूपत्वादवश्यं
तच्चैतैः संप्रयुज्यते, इदं तु न ज्ञायते, कतमैस्तच्चैतैः कियद्भिः कियन्तं
वा संप्रयुज्यत इत्यत आह।
क्लेशैश्चतुर्भिः सहितं निवृताव्याकृतैः सदा।
चैता हि द्विप्रकाराः क्लेशास्तदन्ये च, तदन्येभ्यो व्यवच्छेदार्थमाह।
क्लेशैरिति। क्लेशा अपि षट्, न च तैः (सं)प्रयुज्यतेऽतश्चतुर्भिरित्याह।

1 (p. 14) TrBh

सहितमिति संप्रयुक्तम्। क्लेशा अपि द्विविधाः, अकुशला, निवृता-
व्याकृताश्च। अकुशलेभ्यो विशेषार्थमाह, निवृताव्याकृतैरिति।
न हि निवृतेन विज्ञानेनाकुशलानां संप्रयोगः संभवति, निवृताः
क्लिष्टत्वात्, अव्याकृताः कुशलाकुशलत्वेनाव्याकरणात्, सदेति सर्व-
कालं, यावदस्ति तावत्तैः संप्रयुक्तं। सामान्येन तु क्लेशा द्विशेषतो न ज्ञायन्त
इति विशेषतो निर्दिशति,

आत्मदृष्ट्यात्ममोहात्ममानात्मस्नेहसंज्ञितैः। ६।

उपादानस्कन्धेष्वात्मेति दर्शनमात्मदृष्टिः सत्कायदृष्टिरित्यर्थः,
मोहोऽज्ञानम्, आत्मन्यज्ञानमात्ममोहः, आत्मविषये मान आत्ममानो-
ऽस्मिमान इत्यर्थः, आत्मनि स्नेह आत्मप्रेमेत्यर्थः, तत्रालयविज्ञाने स्व-
रूपे संमूढः सन्नालयविज्ञाने आत्मदृष्टिमुत्पादयति, आत्मदर्शनाच्चित्त-
स्योन्नतिः सोऽस्मिमानः, एतस्मिं त्रये सति आत्माभिमते वस्तुनि
योऽभिष्वङ्गः, स आत्मस्नेहः, आह च, [4B]

अविद्यया चात्मदृष्ट्या चाभिमानेन तृष्णया।
एभिश्चतुर्भिः संक्लिष्टं मननालक्षणं मनः॥
विपर्यासनिमित्तन्तु मनः क्लिष्टं सदैव यत्।
कुशलाव्याकृते चित्ते सदाऽहङ्कारकारणम्॥

एते ह्यात्ममोहादयः क्लेशा मनोविज्ञानभूमिकाः इहच सामान्येना-
भिधानान्न ज्ञायते किं स्वभूमिकैरेव संप्रयुज्यते, उतान्यभूमिकै-
रपीत्यत आह। "यत्रजस्तन्मयैरिति"।

यत्र जातो यत्रजः, तन्मयैरिति यत्र धातौ भूमौ वा जातस्तद्धातुकै-
स्तद्भूमिकैरेव च संप्रयुज्यते, नान्यधातुकैरन्यभूमिकैर्वा। किं पुन-
श्चतुर्भिरेव क्लेशैः संप्रयुज्यते नेत्याह। "अन्यैः स्पर्शाद्यैश्च"
संप्रयुज्यत इति संबध्यते। चशब्दः समुच्चयार्थः, स्पर्शाद्यैरिति
स्पर्शमनस्कारवेदनासंज्ञाचेतनाभिः, एते हि पञ्च धर्माः सर्वत्रगत्वा-
त्सर्वविज्ञानैः संप्रयुज्यन्ते, एतैरपि यत्र जातस्तन्मयैरेव संप्रयुज्यते
नान्यधातुभूमिकैः, अथवाऽन्यैरिति मूलविज्ञानसंप्रयुक्तेभ्यो व्यव-
च्छेदार्थं। मूलविज्ञाने ह्यनिवृताव्याकृताः स्पर्शादयः, क्लिष्टे तु मनसि
निवृताव्याकृताः, यदि तत्क्लिष्टं मनः कुशलक्लिष्टाव्याकृता-
वस्थास्वविशेषेण प्रवर्तते न तस्य तर्हि निवृत्तिरस्ति, अनिवृत्ते च
तस्मिन्कुतो मोक्ष इति कथं न मोक्षाभावः प्रसज्यते, न प्रसज्यते
यस्मादर्हतो न तन्न निरोधसमापत्तौ मार्गे लोकोत्तरे न च॥ ७। [3A]
अर्हत्त्वावस्थायां क्लेशप्रहाणात् क्लिष्टं मनो नैवास्ति, तद्धि भावनाप्रहा-
तव्यक्लेशवदर्हत्त्वप्राप्त्यानन्तर्यमार्गेणैव प्रहीयते, तद-
न्यक्लेशवदर्हत्त्वावस्थायां नैव विद्यते, आर्यश्चान्यायतनवीतराग-
श्चानागामिनो निरोधसमापत्तिलाभिनो मार्गबलेन निरोध-
समापत्तेर्लभ्यत्वान्मार्गवन्निरोधसमापत्तावपि नि-
रुध्यते, निरोधाच्च व्युत्थितस्य पुनरालयविज्ञानादेव प्रवर्तते।
मार्गे लोकोत्तरे न चेति, लोकोत्तरग्रहणं लौकिकव्यवच्छेदार्थ-
म्, लौकिके तु मार्गे क्लिष्टं मनः प्रवर्तत एव, नैरात्म्यदर्शनस्याभा-

दर्शनप्रतिपक्षत्वात्, न लोकोत्तरमार्गे प्रवर्तितुमुत्सहते विपक्ष-
प्रतिपक्षयोर्यौगपद्याभावाल्लोकोत्तरमार्गे तन्निरुध्यते, तस्मादपि
व्युत्थितस्य पुनरालयविज्ञानादेवोत्पद्यते। [द्वितीयः परिणामो
यमुद्दिष्टो निर्दिष्टश्चेति निगमयति। द्वितीयपरिणामानन्तरं
तृतीयपरिणामो वक्तव्य इत्यत आह। [तृतीयः षड्विधस्य या।
विषयस्योपलब्धिः सा, तृतीया, विज्ञानपरिणाम इति वाक्यशेषः,
षड्विधस्येति षट्प्रकारस्य रूपशब्दगन्धरसस्प्रष्टव्यधर्मा
लम्बनकस्य विषयस्य या उपलब्धिर्ग्रहणं प्रतिपत्तिरित्यर्थः। सा
पुनः किं कुशला, अकुशला, अव्याकृतेत्यत आह [कुशलाकुशला
द्वया,,] कुशलाऽकुशलाऽद्वयेत्यव्याकृतापि, अलोभादिभिर्धर्मैः
संप्रयुक्ता कुशला, लोभादिभिर्धर्मैः संप्रयुक्ताऽकुशला, कुशलाकुश-
लैरसंप्रयुक्ता अद्वया न कुशला नाकुशलेत्यर्थः, सा पुनः कैश्चै-
तसिकैः संप्रयुज्यते, कियन्तो वा तत्संप्रयोगिणश्चैतसिका इत्य-
त आह।

सर्वत्रगैर्विनियतैः कुशलैश्चैतसैरसौ।
संप्रयुक्ता तथा क्लेशैरुपक्लेशैस्त्रिवेदना ॥ ९ ॥

यत्रैते सर्वत्रगादय उद्दिष्टास्तेन विज्ञायन्त इत्यतस्तन्निर्देशार्थमाह।
[आद्याः स्पर्शादयः], आदौ निर्दिष्टत्वादाद्याः सर्वत्रगा इत्यर्थः, तथा हि
[सदा स्पर्शमनस्कारवित्संज्ञाचेतनान्विता]मिति प्रथमतो निर्दिष्टा

स्पर्श एषामादिरिति स्पर्शादयः, ते पुनः स्पर्शमनस्कारादयः पञ्च
धर्माः सर्वं चित्तमनुगच्छन्तीति सर्वत्रगाः, तथा ह्येत आलयविज्ञा-
ने क्लिष्टे मनसि प्रवृत्तिविज्ञानेषु चाविशेषेण प्रवर्तन्ते, विनि-
यतानधिकृत्याह। [छन्दोऽधिमोक्षः स्मृतयः सह समाधिधीभ्यां
नियताः], विशेषे नियतत्वाद्विनियताः, एषां हि विशेष एव
विषयो न सर्वः, तत्र छन्दोऽभिप्रेते वस्तुन्यभिलाषः, अभिप्रेते
वस्तुन्यभिलाष इति प्रतिनियतविषयत्वं ज्ञापितं भवत्यनभिप्रेते
छन्दाभावात्, दर्शनश्रवणादिक्रियाविषयत्वेन यदभिमतं वस्तु
तदभिप्रेतम्, तत्र दर्शनश्रवणादिप्रार्थना छन्दः, स च वीर्यारम्भ-
सन्निश्रयदानकर्मकः। अधिमोक्षो निश्चिते वस्तुनि तथैवावधारण-
म्, निश्चितग्रहणमनिश्चितप्रतिषेधार्थम्, युक्तित आप्तोपदेशतो
वा यद्वस्तु असंदिग्धं तन्निश्चितम्, येनैवाकारेण तन्निश्चितमनि-
त्यदुःखाद्याकारेण, तेनैवाकारेण तस्य वस्तुनश्चेतस्यभिनिवेश-
नमेवमेतन्नान्यथेत्यवधारणमधिमोक्षः। स चासंहार्यताकरण-
कर्मकः। अधिमुक्तिप्रधानो हि स्वसिद्धान्तात्परप्रवादिभिरपहर्तुं
न शक्यते। स्मृतिः संस्तुते वस्तुन्यसंप्रमोषश्चेतसोऽभिलपनता,
संस्तुतं वस्तु पूर्वानुभूतम्, आलम्बनग्रहणाविप्रणाशकारणत्वा-
दसंप्रमोषः, पूर्वगृहीतस्य वस्तुनः पुनः पुनरालम्बनाकारस्मरण-
मभिलपनता, अभिलपनमेवाभिलपनता, सा पुनरविक्षेपकर्मिका,

आलम्बनाभिलपिते सति चित्तस्यालम्बनान्तरे आकारान्तरे वा विक्षे-
पाभावाद्विशेषकर्मिका, "समाधिरुपपरीक्ष्ये वस्तुनि चित्तस्यैका-
ग्रता। उपपरीक्ष्यं वस्तु गुणतो दोषतो वा, एकाग्रता एकालम्बनता,
ज्ञानसन्निश्रय(श्र)यदानकर्मकः, समाहिते चित्ते यथाभूतपरिज्ञानात्।
"धीः" प्रज्ञा। सा पुनरुपपरीक्ष्य एव वस्तुनि "प्रविचयो" योगायोगविहितोऽ
न्यथा वेति, प्रविचिनोतीति प्रविचयः सम्यगिभ्यावा, सङ्कीर्ण-
स्वसामान्यलक्षणेष्विव धर्मेषु विवेकावबोधो धीः युक्तिर्योगः, स पुन-
राप्तोपदेशोऽनुमानं प्रत्यक्षञ्च [9B], तेन त्रिप्रकारेण योगेन यो जनितः
स योगविहितः, स पुनः श्रुतमयश्चिन्तामयो भावनामयश्च, तत्रा-
प्रवचनप्रामाण्याद्योऽवबोधः स श्रुतमयः, युक्तिनिध्यानजश्चिन्ता-
मयः, समाधिजो भावनामयः। अयोगोऽनाप्तोपदेशोऽनुमानाभासो
मिथ्याप्रणिहितश्च समाधिस्तेनायोगेन जनितोऽयोगविहितः।
उपपत्तिप्रतिलम्भिको लौकिकव्यवहारावबोधश्च न योगविहितो
नायोगविहितः, एषा च शंस(संश)यव्यावर्तनकर्मिका, शंस
(संश)यव्यावर्तनं प्रज्ञया धर्मान्प्रविचिन्वतो निश्चयलाभादिति।
एते हि पञ्च धर्माः परस्परं व्यतिरिच्यापि वर्तन्ते, एकस्य यथा-
धिमोक्षस्तत्र नावश्यमितरैरपि भवितव्यम्, एवं सर्वत्र वाच्यम्।
उक्ता विनियताः, तदनन्तरोद्दिष्टाः कुशला वक्तव्या इत्यत
आह। " श्रद्धाथ ह्रीरपत्रपा। १०।

I (p. 19) TrBh

[अलोभादि त्रयं वीर्यं प्रश्रब्धिः साप्रमादिका।
अहिंसा कुशलाः। [एते एकादश धर्मा इति वाक्यशेषः। तत्र श्रद्धा
कर्मफलसत्यरत्नेष्वभिसंप्रत्ययः प्रसादश्चेतसोऽभिलाषः। श्रद्धा
हि त्रिधा वर्तते, सति वस्तुनि गुणवत्यगुणवति वा संप्रत्ययाकारा,
सति गुणवति च प्रसादाकारा, सति गुणवति च प्राप्तुमुत्पादयितुं वा
शक्येऽभिलाषाकारा। चेतसः प्रसाद इति। श्रद्धा हि चित्तकालुष्य-
[11A] वैरोधिकीत्यत[illegible]योगे क्लेशोपक्लेशमलकालुष्यविरहितं चित्तं
श्रद्धामागम्य प्रसीदतीति चेतसः प्रसाद उच्यते। सा पुनश्छन्दस-
न्निश्रयदानकर्मिका। ह्रीरात्मानं धर्मं वाऽधिपतिं कृत्वाऽवद्येन
लज्जा। सद्भिर्गर्हितत्वादनिष्टविपाकत्वाच्च पापमेवावद्यं तेनावद्येन
कृतेनाकृतेन वा या चित्तस्यावलीनता लज्जा सा ह्रीः। इयञ्च
दुश्चरितसंयमसन्निश्रयदानकर्मिका। अपत्राप्यं लोकमधि-
पतिं कृत्वाऽवद्येन लज्जा। लोके ह्येतज्जुगुप्सितं मां चैवं कर्माणं विदित्वा
गर्हिष्यतीत्यहो [illegible]कादिभयाद्येन लज्जते, इदमपि दुश्चरितसंयम-
सन्निश्रयदानकर्मकम्। अलोभो लोभप्रतिपक्षः, लोभो नाम
भवे भवोपकरणेषु च याशक्तिः प्रार्थना च, तत्प्रतिपक्षोऽलोभो
भवे भवोपकरणेषु चानाशक्तिर्वैतृष्ण्यञ्च, अयञ्च दुश्चरिताप्रवृत्ति
सन्निश्रयदानकर्मकः, अद्वेषो द्वेषप्रतिपक्षो मैत्री, द्वेषो हि सत्त्वेषु
दुःखे दुःखस्थानीयेषु च धर्मेष्वाघातः, अद्वेषो द्वेषप्रतिपक्षः-

I (p. 20) TrBh

रागो भवभोगयोरध्यवसानं प्रार्थना च, स पुनर्दुःखसंयोजनकर्म-
[12B]
कः, दुःखमत्रोपादानस्कन्धा(स्ते)षां कामरूपारूप्यावचराणा(म)-
दभिनिर्वृत्तिः, अतो रागस्य दुःखसंयोजनं कर्म निर्दिश्यते, प्रतिघः
सत्वेष्वाघातः, सत्वेषु क्रूरचित्तता, येनाविष्टः सत्वानां वधबन्धना-
(दिक)मनर्थं चिन्तयति, स पुनरस्पर्शविहारदुश्चरितसंनिश्रय-
दानकर्मकः, स्पर्शः सुखं तेन सहितो विहारः स्पर्शविहारः न स्पर्श-
विहारोऽस्पर्शविहारः दुःखसहित इत्यर्थः, आघातचित्तस्यावश्यं
दौर्मनस्यसमुदाचारा चित्तं तप्यते, चित्तानुविधानाच्च कायोऽपि
तप्यत एवेति सर्वेष्वीर्यापथेषु स दुःखसंनिपातोऽस्पर्शविहारो भवति,
प्रतिहतचित्तस्य च नास्ति दुश्चरितं विदूरमिति प्रतिघोऽस्पर्शवि-
हारदुश्चरितसंनिश्रयदानकर्मक उक्तः, मोहोऽपायेषु सुगतौ
निर्वाणे तत्प्रापकेषु हेतुषु तेषां चाविपरीते हेतुफलसंबन्धे
यदज्ञानम्, अयञ्च संक्लेशोत्पत्तिसंनिश्रयदानकर्मकः। तत्र क्लेश-
कर्मजन्मात्मकस्त्रिविधः संक्लेशः, तस्योत्पत्तिः पूर्वपूर्वसंक्लेश-
निमित्त उत्तरोत्तरस्य संक्लेशस्यात्मलाभः। उत्पत्तेः संनिश्रयदान-
कर्म मूढस्यैव हि मिथ्याज्ञानसंशयरागादिक्लेशपौनर्भविककर्म-
जन्मनां प्रवृत्ते नामूढस्येति। मानः। मानो हि नाम सर्व एव सत्का-
यदृष्टिसमाश्रयेण प्रवर्तते। स पुनश्चित्तस्योन्नतिलक्षणः। तथा-
ह्यात्मात्मीयभावं स्कन्धेष्वारोप्याहमहमिदं ममेत्यात्मानं तेन
[13A]
तेन विशेषेणोन्नमयति। अन्येभ्योऽधिकं मन्यते। सचागौरवदुःखो-



त्पत्तिसंनिश्रयदानकर्मकः। अगौरवं गुरुषु गुणवत्सु च पुद्गलेषु
स्तब्धता कायवाचोरप्रसन्नता। दुःखोत्पत्तिः पुनरत्र पुनर्भवोत्पत्तिः।
सच पुनश्चित्तोन्नतिस्वरूपाभेदेऽपि चित्तोन्नतिनिमित्तभेदात्स-
प्तधा भिद्यते, मानोऽतिमान इत्येवमादि, हीनात्कुलविज्ञानवित्ता-
दिभिः श्रेयानस्मि कुलविज्ञानवित्तादिभिरिति या चित्तस्योन्नतिः,
सदृशेन वा [illegible] कुलादिभिरेव सदृशोऽस्मीति वा चित्तस्योन्नतिः
स मानः। अतिमानः। कुलविज्ञानवित्तादिभिः सदृशान्त्यागशील
शीलपौरुषादिभिः श्रेयानस्मि श्रेयसा वा कुलविद्यादिभिः सदृशो-
ऽस्मि विज्ञानवित्तादिभिरित्ययमतिमानः। श्रेयसः कुलविज्ञानवित्तै-
रहमेव श्रेयान्कुलविज्ञानवित्तैरिति या चित्तस्योन्नतिरयं माना-
तिमानः। अस्मिमानः। पञ्चसूपादानस्कन्धेष्वात्मात्मीयरहि-
तेष्वात्मात्मीयाभिनिवेशाद्या चित्तस्योन्नतिः सोऽस्मिमानः।
अभिमानः। अप्राप्त उत्तरे विशेषाधिगमे प्राप्तो मयेति या
चित्तस्योन्नतिः सोऽभिमानः। ऊनमानः। बह्वन्तरविशिष्टा
न्कुलविद्यादिभिरल्पान्तरहीनोऽस्मि कुलविद्यादिभिरिति या
चित्तस्योन्नतिरयमूनमानः। मिथ्यामानः। अगुणवतो गुण-
वानस्मीति या चित्तस्योन्नतिः स मिथ्यामानः। अगुणा हि
[13B]
दौःशील्यादयस्ते यस्य विद्यन्ते सोऽगुणवान्, तस्माद्गुणवानस्मी-
त्यनेन हि दानशीलाद्यभावेऽपि गुणवत्त्वमभ्युपगतं भवतीत्यतो नि-
र्वस्तुकत्वान्मिथ्यामान इत्युच्यते। इत्येति सामान्यनिर्देशेऽपि क्लेशा-
(न्त)का यात्पश्चैव क्लेशात्मिकाः। सत्कायदृष्ट्यादिका दृष्टयः संबध्यते।

न लौकिकी सम्यग्दृष्टिरनास्रवा। आसां तु क्लिष्टानां दृष्टीनामाकारत्वा-
द्विशेषेणालम्बनाकारभेदात्परस्परतो भेदः। तत्र सत्कायदृष्टि
र्यत्पञ्चसूपादानस्कन्धेष्वात्मात्मीयदर्शनम्। अन्तग्राहदृष्टि
स्तेनैव पञ्चसूपादानस्कन्धेष्वात्मात्मीयत्वेन गृहीतेषु शाश्वतः
शाश्व (शाश्व)तो वा दर्शनम्। मिथ्यादृष्टिर्यया मिथ्यादृष्ट्या
हेतुं वाऽपवदति फलं क्रियां वा सद्वा वस्तु नाशयति। सा सर्वदर्शन-
पापत्वान्मिथ्यादृष्टिरित्युच्यते। दृष्टिपरामर्शः पञ्चसूपादानस्कन्धे
ष्वग्रतो विशिष्टतः श्रेष्ठतः परमतश्च यद्दर्शनम्। शीलव्रतपरा-
मर्शः पञ्चसूपादानस्कन्धेषु शुद्धितो मुक्तितो नैर्याणिकतश्च यद्द-
र्शनम्। विचिकित्सा कर्मफलसत्यरत्नेषु विमतिः, विविधा मति
र्विमतिः, स्यान्न स्यादिति प्रकृतश्चैवं आत्यन्तिकेनोक्ता। उक्ताः क्ले-
शा सदनन्तरोपक्लेशास्त्विदानीमुपक्लेशा वक्तव्या इत्यत आह।

क्रोधोपनहने पुनः।

म्रक्षः प्रदाशं ईर्ष्याथ मात्सर्यं सह मायया। १२।
शा(शा)ठ्यं मदो विहिंसाह्रीरत्रपा स्त्यानमुद्धवः।
आश्रद्ध्यमथ कौशीद्यं प्रमादो मुषिता स्मृतिः। १३
विक्षेपोऽसंप्रजन्यञ्च कौकृत्यं मिद्धमेव च।
वितर्कश्च विचारश्चेत्युपक्लेशा द्वये द्विधा। १४।

तत्र क्रोधो वर्तमानमपकारमागम्य यश्चेतस आघातः, अयञ्चा-
घातस्वरूपत्वात्प्रतिघांशेऽभिधीयते। चित्तस्य प्रतिघस्यावस्था-



विशेषे प्रज्ञप्तत्वात्प्रतिघांशिकः। वर्तमानमपकारमागम्य यश्चेतस
आघातः सत्त्वासत्त्वविषयः, दण्डादानादिसंनिश्रयदानकर्मकश्च
स क्रोध इति प्रज्ञप्यते। उपनाहो वैरानुबन्धः, क्रोधादूर्ध्वम
नेनेदमपकृतमित्यस्य वैरात्मकस्याशयस्यानुत्सर्गः, प्रब-
न्धेन प्रवर्तनमुपनाहः। अयञ्चाक्षान्तिसंनिश्रयदानकर्मकः। अ-
क्षान्तिरपकारामर्षणं, प्रत्यपकारचिकीर्षा च। अयमपि क्रोधव-
त्प्रद्वेषावस्थाविशेषे प्रज्ञप्यते। अतः पृथगपि संज्ञेन वेदितव्यः।
म्रक्षः आत्मनोऽवद्यप्रच्छादना, छन्ददोषभयादीन्निराकृत्य काले तद्धि-
तैषिणा चोदकेन तत्त्वमेवं कारीत्युक्ते, अज्ञस्य मोहांशि(शि)क्य-
वद्यप्रच्छादना म्रक्षः, मोहांशि(शि)कत्वं तु म्रक्षस्य प्रच्छादनाकार-
त्वात्। अयञ्च कौकृत्यास्पर्शसंनिश्रयदानकर्मकः। धर्मितैषा य-
दवद्यं प्रच्छादयतः कौकृत्यमुत्पद्यते, कौकृत्याच्चावश्यं दौर्मनस्येन-
संप्रयोगादस्पर्शविहार इति। प्रदाशः चण्डवचोदासिता (शि), [illegible]
प्रगाढं पारुष्यं मर्मपट्टनयोगेन (घट्टन), दशनशीलो दासी(शी), त-
द्भावो दाशिता। अयञ्च भावप्रत्ययः स्वार्थिकः। [4B] चण्डेन वचसा
प्रदश(श)तीति चण्डवचोदासि(शि)ता। अयञ्च क्रोधोपनाहपूर्वक-
श्चेतस आघातस्वभाव इति प्रतिघांशिक एव न द्रव्यतो भिद्यते।
अयञ्च वाग्दुश्चरितप्रसवकर्मकः, अस्पर्शविहारकर्मकश्च, तथा हि
पुद्गलस्य दुःखसंवासत्वात्। ईर्ष्या परसम्पत्तौ चेतसो व्यारोषो

लाभसत्काराध्यवसितस्य लाभसत्कारकुलशीलश्रुतादिगुणविशे-
षान्यतमस्योपलम्भाद् द्वेषांशिकोऽमर्षकृतश्चेतसो व्यारोप ईर्ष्या,
स्वकाश्रयं व्यापयतो व्यारोपः, दौर्मनस्यसंप्रयोगात्तत्पूर्वकश्चा-
स्पर्शविहार इति दौर्मनस्यास्पर्शविहारकर्मिकोच्यते । मात्सर्यं
दानविरोधी चेतस आग्रहः, उपात्तं वस्तु धर्मामिषकौशलात्मक-
म्, येन पुद्गलो याचकायार्थिनेऽर्थितेन दीयते मात्सर्यम्, न-
क्लिश्नाति याचनाभावाद् अधीरो ऽप्युच्यते, लाभसत्काराध्यवसितस्य
जीवितोपकरणेषु रागांशिकश्चेतस आग्रहः परित्यागेच्छामात्सर्यम्,
इदं चासंलेखनिश्रयदानकर्मकम्, असंलेखः पुनर्मात्सर्यवशात् परिष्का-
रानावश्यकोपकरणानां सञ्चयाभिरतिः । माया परवञ्चनायाऽभूता-
र्थसंदर्शनता, लाभसत्काराध्यवसितस्य परवञ्चनाभिप्रायेणान्यथा-
वस्थितस्य शीलादेः स्वस्यान्यथा प्रकाशनता, इयञ्च सहिताभ्यां रागमो-
हाभ्यामभूतान् गुणान् प्रकाशयतस्तयोः समुदितयोः प्रज्ञप्यत इति क्रो-
धादिवत् प्रज्ञप्तित एव न द्रव्यत इति मिथ्याजीवसंनिश्रयदानकर्मिका ।
शाठ्यं स्वदोषप्रच्छादनोपायसंगृहीतं चेतसः कौटिल्यं स्वदोष-
प्रच्छादनोपायः पर्यायमोहनम्, तत्पुनरनेनात्मानं नातिसरति विक्षिपति,
अपरिस्फुटं वा प्रतिपद्यते, अत एव शाठ्यं मुक्ताद् भिद्यते, नहि स्फुट-
मेव प्रच्छादयति न काङ्क्षा, इदमपि लाभसत्काराध्यवसितोपायाभ्यां
रागमोहाभ्यां स्वदोषप्रच्छादनार्थं पर्यायमोहनाय प्रवर्तते, तयोरेव



सहितयोः प्रज्ञप्यते, इदञ्च सम्यगववादलाभपरिपन्थकर्मकम्, सम्य-
गववादस्य यो लाभो योनिशो मनसिकारस्तस्यान्तरायं करोति । मदः
स्वसम्पत्तौ रक्तस्योद्धर्षश्चेतसः पर्यादानम्, कुलारोग्ययौवनबल-
रूपैश्वर्यबुद्धिमेधाप्रकर्षः स्वसम्पत्तिः, उद्धर्षो हर्षविशेषः, येन हर्ष-
विशेषेण चित्तमस्वतन्त्रीक्रियते तेन न स्वतन्त्रीकरणात् पर्यादानं
भवतीत्येतदुक्तं चेतसः पर्यादानमिति, अयञ्च सर्वक्लेशोपक्लेश-
संनिश्रयदानकर्मकः । विहिंसा सत्त्वविहेठना विविधैर्वध-
बन्धनताडनतर्जनादिभिः सत्त्वानां हिंसा विहिंसा, विहेठ्यन्तेऽन-
या सत्त्वा वधबन्धनादिभिर्दुःखदौर्मनस्योत्पादनादिति सर्वसत्त्व-
विहेठना, सा पुनः प्रतिघांशिकी निर्घृणता सत्त्वेषु चित्तरूक्षता, सत्त्व-
विहेठनकर्मिका विहिंसेत्युच्यते, आह्रीक्यं स्वयमवद्येनालज्जा,
तस्मिन्नवद्ये आत्मानमयोग्यं मन्यमानस्यापि योऽवद्येनालज्जा सा-
ह्रीक्यम्, ह्रीविपक्षभूतम् । अनपत्राप्यं परतोऽवद्येनालज्जा, लोक-
शास्त्रविरुद्धमेतन्न मया क्रियत इत्येवमवगच्छतोऽपि या तथा पाप-
क्रियया ऽलज्जा साऽपत्राप्यविपक्षभूतमनपत्राप्यम्, एतच्च द्वय-
मपि सर्वक्लेशोपक्लेशसाहाय्यकर्मकम्, रागद्वेषमोहप्रकारेषु सर्वा-
सत्कार्यप्रभवहेतुषु रागद्वेषयोर्मोहा(प)श्च यथासंभवं प्रज्ञप्यते
न तु स्वतन्त्रमस्ति । स्त्यानं चित्तस्याकर्मण्यता, स्तैमित्यं स्तिमित-
भावः स्तैमित्यं, यद्योगाच्चित्तं जडीभवति, स्तिमितं भवति नाल-

प्रवृत्तत्वात्, स एव चेतस्यौदारिकता, औदारिकतेति, स्थूलता वस्तु-
मात्रपर्येषणाकारत्वात्। एवं च नयो विचारेऽपि द्रष्टव्यः, विचारोऽपि हि
[17A]
चेतनाप्रज्ञाविशेषात्मकः, प्रत्यवेक्षको मनोजल्प एव। इदं तदिति
पूर्वाधिगतनिरूपणात् अत एव च चित्तसूक्ष्मतेत्युच्यते, एतौ च स्पर्श-
स्पर्शविहारसंनिश्रयदानकर्मकौ, अत्र यो औदारिकसूक्ष्मतया
व्यवस्थापना पृथक्करणम्। द्वये द्विधेति, द्वयश्च द्वयश्च द्वये,
ते पुनः कौकृत्यमिद्धौ वितर्कविचारौ च, एते च चत्वारो धर्मा द्विधा
क्लिष्टा अक्लिष्टाश्च। तत्राकुशलमकृत्वा कुशलं च कृत्वा यश्चेतसो
विलेखस्तत् क्लिष्टं कौकृत्यम्, यत्कुशलमकृत्वा तत्कौकृत्यमक्लिष्टम्,
मिद्धमपि क्लिष्टचेताविद्धं क्लिष्टचित्तसंप्रयुक्तं च क्लिष्टम्, अक्लिष्ट-
चित्ताविद्धमक्लिष्टचित्तसंप्रयुक्तश्चाक्लिष्टम्, कामव्यापादविहिंसा-
नैष्क्रम्यादिवितर्का अक्लिष्टाः।
दिवितर्काः क्लिष्टाः, एवं परोपघातोपायविचारः क्लिष्टः, परानुग्रहोपा-
यविचारोऽक्लिष्टः। तत्र ये कौकृत्यमिद्धवितर्कविचाराः क्लिष्टा(ः) त एवो-
पक्लेशा नेतरे। तत्र यथारूपप्राप्त्युपलब्धिः षट्प्रकारा यथासंभवं
सर्वैश्चैतसिकैः संप्रयुज्यते। सर्वत्रगैर्विनियतैः कुशलैः क्लेशैरुप-
क्लेशैश्च, एवं त्रिवेदना, तिसृभिश्च वेदनाभिः संप्रयुज्यते, सुखया,
दुःखया, अदुःखासुखया च सौमनस्यदौर्मनस्योपेक्षास्थानीयेषु रूपादिषु
तदुत्पत्तेः कुशला अकुशला अव्याकृता च। आलयविज्ञानं तु
[17B]
सर्वत्रगैः पञ्चभिरेव संप्रयुज्यते, नान्यैस्तत्र चोपेक्षैव वेदना



अनिवृताव्याकृतश्च क्लिष्टं मनः सर्वत्रगैः पञ्चभिश्चतुर्भिश्च क्लेशैः राग-
मोहादि(दृष्टि)मिमानोपेक्षैव वेदना निवृताव्याकृतश्चेति। इदमि-
दानीं चिन्त्यते, किं पञ्चानां चक्षुर्विज्ञानादीनां युगपदालम्बनप्रत्य-
यसान्निध्ये आलयविज्ञानादेकस्यैवोत्पत्तिर्भवति न द्वयोर्न बहूनां
वा, यथैके मन्यन्ते, न द्वयोर्न बहूनां वा युगपत्समनन्तरप्रत्ययाभावादेक-
स्यैव विज्ञानस्योत्पत्तिर्भवति, न चैकं विज्ञानं बहूनां समनन्तरप्रत्य-
यत्वं प्रतिपत्तुमर्हते उतानियमेन, यद्येकस्यैव प्रत्ययसान्निध्य-
मेकमेवोत्पद्यते, एवं द्वयोर्बहूनां च प्रत्ययसान्निध्ये उत्पत्तिर्भवती-
त्यत आह।

पञ्चानां मूलविज्ञाने यथाप्रत्ययमुद्भवः।
विज्ञानानां सह न वा तरङ्गानां(णां) यथा जले॥ १५॥

पञ्चानामिति चक्षुरादिविज्ञानानां तदनुचरमनोविज्ञानसहितानाम्,
पञ्चानां चक्षुरादिविज्ञानानां बीजाश्रयत्वात् तत्र उत्पत्तेर्गतिषु
जन्मोपादानात् आलयविज्ञानं मूलविज्ञानमित्युच्यते, यथाप्रत्य-
यमुद्भव इति, यस्य यस्य यः प्रत्ययः सन्निहितस्तस्य तस्य नियमेनो-
द्भव आत्मलाभः, सह न वेति युगपत्क्रमेण वा, तरङ्गाणां यथा
जल इति, आल(य)विज्ञानात्पुनरेषां विज्ञानानां युगपदयुगपच्चो-
[18A]
त्पत्तौ दृष्टान्तः, यथोक्तम्। यथा विशाले महति उदकौघस्य
वहतः सचेदेकस्य तरङ्गस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो भवत्येक-

मेव तरङ्गं प्रवर्तते, सचेद्द्वयोस्त्रयाणां संबहुलानां तरङ्गाणामुत्पत्ति-
प्रत्ययः प्रत्युपस्थितो भवति, यावत्संबहुलानि तरङ्गाणि प्रवर्तन्ते,
न च तस्योदकौघस्य स्रोतसा वहतः समुच्छित्तिर्भवति, न पर्युपयोगः
प्रज्ञायते, एवमेव विशालमते! तदोघस्थानीयमालयविज्ञानं संनि-
श्रित्य प्रतिष्ठाय सचेदेकस्य विज्ञानस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो
भवति, एकमेव चक्षुर्विज्ञानं प्रवर्तते, सचेद्द्वयोस्त्रयाणां सचेत्प-
ञ्चानां विज्ञानानामुत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, सकृद्याव-
त्पञ्चानां प्रवृत्तिर्भवति. अत्र गाथा. ।

आदानविज्ञानगभीरसूक्ष्मो ओघो यथा वर्तति सर्वबीजो ।
बाला एषो मयि न प्रकाशितो मा हैव आत्मा परिकल्पयेयुः ॥ इति
नहि विज्ञानप्रतिनियमेनालम्बनप्रत्ययवत्समनन्तरप्रत्यय इष्यते,
सर्वविज्ञानोत्पत्तौ सर्वस्य विज्ञानस्य तदेकसमनन्तरप्रत्ययत्वाभ्युपगमात्,
अत एकस्मादपि समनन्तरप्रत्ययादालम्बनप्रत्ययसान्निध्ये द्वयोर्ब-
हूनाञ्च विज्ञानानामुत्पत्तिर्न विरुध्यते, किञ्चात्र कारणम्, यत्समनन्तर-
प्रत्ययप्रतिनियमाभावे पञ्चानाञ्च युगपदालम्बने । न प्रत्ययसान्नि-
ध्ये एकेनैवोत्पत्तव्यं [8B] न पञ्चभिरपीति, तस्मादालम्बनस्य युगे
पञ्चानामपि चोत्पत्तिरित्यभ्युपेयम्, इदमिदानीं वक्तव्यम्, किं
मनोविज्ञानं चक्षुरादिविज्ञानैः सह प्रवर्तते विना च, उत नैवेत्य-
त आह ।



मनोविज्ञानसंभूतिः सर्वदाऽसंज्ञिकादृते ।
समापत्तिद्वयान्मिद्धान्मूर्छनादप्यचित्तकात् ॥ इति,
सर्वदेति सर्वकालं चक्षुरादिविज्ञानैः सह विना चेत्यर्थः, अस्योत्सर्ग-
स्यापवादमारभते, "आसंज्ञिकादृते, समापत्तिद्वयान्मिद्धान्मूर्छनाद-
प्यचित्तकाद्" इति, तत्रासंज्ञिकं संज्ञिसत्त्वेषु देवेषूपपन्नस्य यश्चित्त-
चैतसिकानां धर्माणां निरोधः, समापत्तिद्वयमसंज्ञिसमापत्तिर्नि-
रोधसमापत्तिश्च, तत्रासंज्ञिसमापत्तिस्तृतीयध्यानाद्वीतराग-
स्य ऊर्ध्वमवीतरागस्य निःसरणसंज्ञापूर्वकेण मनसिकारेण मनो-
विज्ञानस्य तत्संप्रयुक्तानाञ्च चैत्तानां यो निरोधः सोऽत्रासंज्ञिसमा-
पत्तिरित्युच्यते, निरुध्यतेऽनेनेति निरोधः, स पुनः ससंप्रयोग-
स्य मनोविज्ञानस्य समुदाचारनिरोधः, आश्रयस्यावस्थाविशेषः,
स च समापत्तिचित्तादनन्तरं चित्तान्तरोत्पत्तिविरुद्ध आश्रयः प्राप्य-
त इति समापत्तिरित्युच्यते, निरोधसमापत्तिरप्याकिञ्चन्यायतनवीत-
रागस्य शान्तविहार[9A]संज्ञापूर्वकेण मनसिकारेण ससंप्रयोगस्य मनो-
विज्ञानस्य क्लिष्टस्य च मनसो यो निरोधः, इयमप्यसंज्ञिसमापत्ति-
वदाश्रयस्यावस्थाविशेषे प्रज्ञप्यते, अचित्तकं मिद्धं गाढमिद्धोप-
हतत्वादाश्रयस्य तावत्कालं मनोविज्ञानाप्रवृत्तेरचित्तकमित्यु-
च्यते, अचित्तिका मूर्छा, आगन्तुनाऽभिघातेन वातपित्तश्लेष्म(णा)
वैषम्येण वा यदाश्रयवैषम्यं मनोविज्ञानप्रवृत्तिविरुद्धम्। तत्रा-

चित्तानि (ति) मूर्च्छोपपद्यते। एताः पञ्चावस्था वर्जयित्वा तदन्यासु
सर्वास्ववस्थासु मनोविज्ञानं प्रवर्तते वेदितव्या। एवमासंज्ञि
कादिषु मनोविज्ञाने निरुद्धे तदपगमे पुनः कुत उत्पद्यते। यत-
स्य कालान्तरेणापि न भवति। तत्पुनरालयविज्ञानादेवोत्पद्यते। तद्धि
सर्वविज्ञानबीजकमिति। यत्र विज्ञानपरिणामे आत्मधर्मोपचारः
स पुनस्त्रिधेत्युद्दिश्य विस्तारेण त्रिविधोऽपि निर्दिष्टः। इदानीमात्मधर्मो-
पचारो यः प्रवर्तते स विज्ञानपरिणाम एव न विज्ञानपरिणामा-
दन्यत्र पृथगस्त्यात्मधर्मा चेति यत्प्रतिज्ञातं तत्प्रसाधनार्थमाह।

विज्ञानपरिणामोऽयं विकल्पो यद्विकल्प्यते।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्र(क)मिति॥
[18]

योऽयं विज्ञानपरिणामस्त्रिविधोऽनन्त

[illegible] )

I (p. 35) TrBh

